निजात्मिकभावं विहाय नाऽन्यत् किञ्चिदपि विदधाति, "यः कार्यं करोति स तस्य कार्यस्य कर्ता"
कथ्यते निश्चयदृष्ट्यातु जीवो निजात्मिकभावं विहाय नाऽन्यत् किञ्चिदपि विदधाति, कर्मतो रागादिभावाः समुत्पद्यन्ते रागादि-
इति नियमेन, रागद्वेषौ कर्माणि विदधतस्ततः कर्तृत्वमपि रागद्वेषयोरेव संभवति, यदाच भावः कर्माणि करोति तदा कर्तृत्वं भाव-
भावतश्च कर्मादि वस्तूनि समुत्पद्यन्ते.तत एवं भाव कर्मणोः परस्परं कर्तृत्वं समस्ति, कर्मणोऽपि कर्तृत्वं कर्मत्वं च,संभवेदिति।
स्य, यदा च पुनः कर्म भावं विधत्ते तदा कर्मणः कर्तृत्वं स्यादित्थं भावः कर्त्ता कर्म च,

"व्यवहारदृष्ट्या तु कर्त्ता जीवः"

यथा पदातिभिर्जितंयुद्धं राज्ञाजितमिति प्रोच्यते तद्वद्रागादिभिर्विहितं कर्म जीवेन विहितमिति प्रोच्यते, निश्चयदृष्ट्या यदि परामृश्यते तदा, युद्धे विजयप्रापकाः सैन्यमनुष्याः सन्ति तथापि, व्यवहारेण राज्ञोविजयः प्रोच्यते, एवं वस्तुतया तु कर्मणां कर्तारः क्रोधादिभावाःसन्ति तथापि व्यवहारेणतुकर्मणां कर्ता जीवो व्यपदिश्यते। "तात्त्विकदृष्टिः" औदारिक-वैक्रियाऽऽहारक-तैजस-कार्म-
णानीमानि पञ्चशरीराणि, वज्रर्षभनाराचादिषट्संघयणानि, समचतुरस्रादीनि षट्शरीरसंस्थानानि, मनुष्यदेवादिचतुर्गतय इत्या-
दीनि कर्मजन्यपुद्गलविकृतस्वरूपाणि सन्ति । मिथ्यात्व–सास्वादन–मिश्र–अविरतिसम्यग्दृष्टिः–देशविरति–प्रमत्ताऽप्रमत्ता-
ऽपूर्वकरणाऽनिवृत्तिकरण–सूक्ष्मसंपरायोपशान्तमोह–क्षीणमोह–सयोगिकेवलीनीमानि त्रयोदशगुणस्थानानि पौद्गलिकानि सन्ति,
कर्मप्रकृतयश्च पुद्गलजाताः सन्ति ततस्तदुत्पन्नानि गुणस्थानान्यपि पौद्गलिकानि स्युः, मिथ्यात्वादिगुणस्थानानि कर्मप्रकृतितो
जातानि, यतो गुणस्थानोत्पत्तौ मोहनीयकर्म, मानसादिकारणमस्ति, प्रथमतश्चत्वारि गुणस्थानानि दर्शनमोहनीयकर्मनिमित्तत्वेन
जातानि, पञ्चमादारभ्य द्वादशगुणस्थानावसानानि गुणस्थानानि, मोहनीयकर्मण उदयेन जायन्ते, त्रयोदशगुणस्थानंतु मानसादि
योगतः स्थिरत्वं भजते, ततस्तानि निखिलानि गुणस्थानानि पौद्गलिकान्येव सन्ति, चतुर्दशगुणस्थानंतु तस्मिन्मानसादियोगा-

ऽभावतः पौद्गलिकं न स्यात्। क्रियते विचारोद्दिष्टष्ट्या, प्रथमस्त्वात्मिकदृष्ट्या द्वितीयः पौद्गलिकदृष्ट्या च, जीवोऽयं शुद्धस्वरूपः कर्मरहितश्चेति दृष्टिर्निश्चयस्य पुनः सा तात्त्विकी च, तया दृष्ट्या यदि परामृश्यते तर्हि यस्मिन् यस्मिन् गुणस्थाने जीव पूर्णतायां न्यूनत्वं भासते तत्र तत्र परामर्शं कुर्वता ज्ञायते यत्तावान् कर्मभागः मालिन्यभागः पुद्गलस्याऽस्ति, तथाचाऽमुक प्रकृतिसत्ता किंवोदयो यत्र भवेत् तदमुकगुणस्थानं प्रोच्यते, एतावता कर्मप्रकृतिसत्तास्वरूपं तथा कर्मप्रकृत्युदयस्वरूपमिदं मालिन्यं नात्मसंबन्धि, किंतु पुद्गलसंबन्धि वर्तते, ततश्च शुद्धसत्ताविशिष्टनिर्मलदृष्ट्या निखिलानीमानि त्रयोदशगुणस्थानानि जडप्रकृत्या जातान्येवं ज्ञास्यन्ते एव। पुद्गलदृष्ट्या यदि विचारः क्रियेत तर्हि गुणस्थानेऽस्मिन्निदं कर्म न्यूनीभूतमेतावानात्मगुणः प्रादुर्भूतः, यथायथैवमुत्तरोत्तरगुणस्थानलाभो भवेत् तथा तथा कर्मपुद्गलानां न्यूनत्वं भवेत् पुनरात्मगुणः प्रादुर्भवेत्, एवं चतुर्दशगुणस्थानेषु निखिलानि कर्माणि नश्येयुः पुनरात्मविकाशो भवेत्, दृष्ट्याचानया गुणस्थानान्यात्मविकाशरूपेण मन्यामहे तर्हि तद्योग्यमस्ति, द्वयोः स्थानयोरपेक्षातः कथनेन, यथार्थवस्तुस्वरूपं ज्ञायते एव। ये देहचैतन्ययोरेकत्वं मन्यन्ते ते गुणस्थानानि जीवरूपेण वदन्ति, किंतु ये विवेकज्ञाने निष्णातास्ते तु गुणस्थानानि जीवरूपेण नाऽभिदधति। शङ्कन्ते केचिदत्र—यदि गुणस्थानं जीवस्वरूपं न स्यात्तर्हि तानि तानि गुणस्थानानि कथंस्तूयन्ते, तेषु तेषु गुणस्थानेषु च स्थिता मुनयः कथं नम्यन्ते अत्रोत्तरमभिदध्मः—षष्ठप्रमत्तगुणस्थानत आरभ्य, मुनित्वस्य प्रारंभो भवति ततो जीवेनैवंज्ञायते यत् षष्ठादि गुणस्थानानि मुनिभ्य एव भवेयुस्ततश्च मुनिभ्यो वन्दनं विधीयते तथोपासनाऽपि क्रियते, विधातव्योऽयं परामर्शो,यद् गुणस्थानस्याधारत्वं, तस्य च गुणस्थानस्य धारको जीव आधेयोस्ति तेन गुणस्थानमात्मनः शुद्धस्वरूपं नास्ति, पुनस्तस्य गुणस्थानस्य जीवेन सार्धमभेदत्वं न,किन्तु कथञ्चिद्भिन्नत्वं स्याद्'अस्ति विशेषत्वमत्र,यदियं वन्दना जीवाय शुभोपयोगकारणं,तदा च वन्दनवि-

यायकजीवस्य शुभोपयोगो विधेत, पुनरनेन शुभोपयोगेन जीवाय, विविधसंसारसुखकारणं पुण्यं दीयते । चक्रवर्तित्व-इन्द्रत्व-तीर्थङ्करत्वादिलाभे "पुण्यस्यैव" प्रधानकारणत्वम्, अस्य पुण्यस्य च प्राप्तौ मुख्यकारणत्वं "शुभोपयोगस्य" तस्य शुभोपयोगस्य कारणं त्वस्मै मुनये क्रियमाणवन्दनप्रभृति भवेत्, एतेन प्रमत्तादिगुणस्थानेभ्यः क्रियमाणा वन्दना सांसारिक कल्याणस्य कारणं भवेत्, सा वन्दना निष्फला तु न, परं ततो निराबाधसुख-शान्तियुक्तमोक्षलाभस्तु न भवेत्, तदर्थंतु द्वि प्रकारयोः शुभाऽशुभबन्धनयोर्विनाशः कर्तव्यः स्यात्, पुनः शुद्धचिद्रूपात्मनो ध्यानं कर्तव्यं, केवलं गुणस्थानवन्दनेन जीवाय, वीतराग-स्वसंवेदनत्वाविशिष्ट सुखस्यलाभो न भवतीति वचनाऽभिप्रायोऽस्ति । यथा कोशवर्णनेन खड्गवर्णनं न भवति भूत-मिति च न मन्यते, तद्वद्चेतनदेहस्तवनेन ज्ञानस्वरूपात्मनः स्तुतिर्जातेति नैव गण्यते, यथा च खड्गतो विदारणं छेदनं लवनमादि कार्यं भवति तत् कार्यं कोशतो न भवति, तत एव कोशतः खड्गो विभिन्नस्तद्वत् सप्तधातुमच्छरीरमचेतनमस्ति तस्य वर्णने नात्मवर्णनं भवेत्, ज्ञानलक्षणवानात्मा चैतन्यविशिष्टः, तस्य चैतन्यात्मनः कार्यं जडो देहः कर्तुं न शक्नोति ततो देहस्तुत्या-ऽऽत्मस्तुतिर्मान्या न भवति परमात्मस्तुतिर्मान्या भवेत्, यस्य प्रतीतौ सत्यामपि यः कदापि न प्रतीयते स ततः सर्वथा भिन्नः यथा "रसाद्रूपं भिन्नमस्ति" तद्वच्छरीरप्रतीतौ सत्यामपि चैतन्यप्रतीतिर्नभवति ततः शरीरं चैतन्याद् भिन्नमस्ति परं ज्ञानलक्षणा दात्मा तु न भिन्नः यदि देहरूप आत्मा भवेत्तर्हि देहप्रतीतौ सत्यामात्मप्रतीति र्भवेत् किंतु सा न भवति, यथाच रसप्रतीतिसमये रूपप्रतीतिर्न भवति, तेन रसाद्रूपं विभिन्नं तद्वच्छरीरप्रतीतौ आत्मप्रतीतिर्नभवति ततः शरीरादात्मा भिन्नः "ज्ञानं" चात्मनो लक्षणं ततो ज्ञानस्यात्मतो भिन्नत्वं नास्ति परं ज्ञानस्वरूपात्माऽस्ति । इन्द्रियैर्यद्दृश्यते ज्ञायतेऽनुभूयते च तन्निखिलमात्मतो वाह्यं भिन्नं वा विनाशकमचैतन्यं च, यदाचात्मनो मोक्षो भवति तदा रागद्वेषादेः किमपि स्वरूपं न भवति तत इदं सर्वं पौद्गलिक

मचेतनंच,यथाचाऽभ्राच्छादनतो भानौ विविधाकारा दृश्यन्ते तद्वद्राग–मोह–मदादयो ये ये विकारा आत्मनि दृश्यन्ते ते ते सर्वेऽम्बरस्येव कर्मणामुपाधित उद्भूताः सन्ति, यथाच रविरखण्डतेजोराशिः प्रकाशस्वभाववान् चास्ति तथापि तस्याम्बरव्यवधानत्वेन तेजसि प्रकाशगुणे च न्यूनत्वमन्यविकाराश्च दृश्यन्ते, यदाचाऽम्बराणि दूरीभवन्ति तदा भानोर्यथा मूलस्वरूपं भवेत् तादृशः स रूपवान् गानुदृश्यते तद्वत् प्रकाशस्वरूपोऽयमात्मा तथाऽपि कर्मणामावरणतो नर–नारकादिगतौ जातौ वा राग द्वेषाऽज्ञानरूपेण दृश्यते ते सर्वे कर्म विकारा परमात्मनो न स्युः, तेषां च दूरत्वे पूर्णस्वरूपेणात्मा प्रकाशते, अस्मादेष निर्णयो भवति यद्रागादिभावाः कर्मतो जायन्ते नात्मसंबन्धत्वेन, यथाच सुवर्णं मृदा सह दीर्घसमयपर्यन्तं भवेत्तथापिसुवर्णं मृद्रूपं न भवति मृच्च सुवर्णरूपं न लभते, तद्वज्जीवस्य कर्मणासहानादिसंबन्धे सत्यपि जीवः कर्मत्वं न लभते कर्म च जीवत्वं नाप्नोति। वर्तते यथार्थसुखमात्मनि कर्मवियुक्तदशायांच, न स्वयमात्मा कर्म समुपार्जयति किंतु रागद्वेषादिभावत उत्पद्यते, ततो रागादि भावकर्मणोश्च परस्परं कार्यकारणभावः स्यात्, पुनरात्मकर्मणोश्च न संभवति कार्यकारणभावः । शास्त्रेषु च "ये औदयिकौपशमिक–क्षायिकभावा अनेकप्रकारेण वर्णितास्ते सर्वे भावा अपेक्षया जडा–अचेतनाः सन्ति । ये भावा कर्मणामुपशमाद् भवेयुस्ते "औपशमिकभावाः" ये च कर्मक्षयात्समुत्पद्यन्ते ते "क्षायिकभावा,:" कर्मक्षयोपशमतश्च यो जायते स "क्षायोपशमिकः," कर्मण उदयेन यो भावः प्रादुर्भवति स "औदयिकः," यत्र च कर्मणामुपशमः, क्षयः, क्षयोपशमः, किंवोदयः, कारण रूपा न स्युः किंतु, यो जीवस्वभावत्वेन भवेत् स "पारिणामिक भावः" भवति । येचाऽध्यवसाया अन्याऽध्यवसायबलेनाऽधः स्थिता भवेयुरन्याऽध्यवसायविद्यमानत्वे न प्रादुर्भवेयुस्तेषां नाम "उपशमः" यथाऽग्नेरुष्णत्वं किंवा दीपादेः प्रकाशोऽग्नेरुपरि भूतिक्षेपेण किंवा दीपस्योपरि भाजनादिवस्त्वाच्छादनेन, तिरोहिततांप्राप्नुयात् परं नाशो प्रका-

शस्य किंवोष्णत्वस्य न भवेत्, तद्वदमुकप्रकारस्योत्तमपरिणामस्य सामर्थ्येन, कियत्कर्मप्रकृतयस्तदोदयमागत्य, स्वप्रभावो जीवं दर्शयितुं न शक्नुवन्ति तस्यनाम "उपशमभावः" मोहनीयकर्मप्रकृते रेवोपशमभावो भवति ततश्चोपशमसम्यक्त्वमुपशमचारित्रं च प्रादुर्भवति, दर्शनमोह–चारित्रमोहाविमौ द्वौ विशुद्धपरिणामेनोपशमयितुं शक्यौ, यथा मनुष्योऽन्यकार्ये प्रवृत्तिं कुर्वाणस्तास्मिन्नासक्तः स्वल्पसमयाय, स्वस्य शोभनाऽशोभनाऽभ्यासौ यथा विस्मरति तद्वत्, सुविचारेण किंवा सुसङ्गतिहेतुना, द्वे इमे प्रकृत्यावुपशमयितुं शक्नोति किंतु, तत्क्षयाऽभावेन प्रागुक्तप्रवृत्त्यभावेन वा, तादृशनिमित्तराहितत्वेन पुनस्ताद्विरोधिप्रकृतिनिमित्तानां समागमने सति पश्चात्ताः प्रकृतयः सत्तातो बहिरागत्य, स्वप्रभावं दर्शयन्ति, तेनायमुपशमभावोऽपि कर्मप्रकृतिहेतुना विद्यते ततः स "चैतन्य स्वरूपो न।" मतिज्ञान–श्रुतज्ञानाऽवधिज्ञान–मनःपर्यवज्ञान–मत्यज्ञान–श्रुताऽज्ञान–विभङ्गज्ञान–चक्षुर्दर्शनाऽचक्षुर्दर्शनाऽवधिदर्शन क्षायोपशमिकभावसंबन्धि दान–लाभ–भोगोपभोग–वीर्य–क्षायोपशमिकभावसंबन्धिसम्यक्त्व–सरागचारित्र–देशविरतय इमा अष्टादशप्रकृतयः क्षायोपशमिकभावस्य सन्ति; प्रकृतिष्वासु या उदयप्राप्तास्तासां क्षयो भवति; पुनर्या उदयं न प्राप्नुयुस्तासामुपशमो विधीयते किंवा, विपाकद्वारेण ताः प्रकृतयो न भुज्यन्ते किंतु प्रदेशद्वारेण तासामुपभोगः क्रियते, यथा च पावकस्योपरि भूतिस्थापने स पावक आच्छादितो भवति ततश्चबहिरग्निर्नदृश्यते तावानुपशमः, परं तस्य सूक्ष्मोष्मद्वारेणोष्णता बहिरागच्छति तद्वदमुकप्रकृतिः विपाकतो भोगयोग्योपशान्ता तिष्ठति प्रदेशद्वारेण च ता उपभुज्यन्ते ततः स क्षायोपशमिक भावः प्रोच्यते, अत्राऽपि प्रकृतेरुपशमस्य किंवा क्षयकरणस्यैव कथनेनाऽयं भावोऽपि पौद्गलिक एव नतु चैतन्ययुक्तः। देव–मनुष्य–तिर्यङ्–नरकगति–क्रोध–मान–माया–लोभकषाय–स्त्री–पुरुष–नपुंसकवेद–मिथ्यात्वाऽज्ञानाऽसंयमाऽसिद्धत्व–कृष्ण–कापोत–नील–तेजः–पद्म–शुक्ललेश्या इमा एकविंशतिः प्रकृतय औदयिकभावस्य सन्ति, यस्यां गतौ च जीवो याति तत्र, तद्योग्यास्विमासु

पुनरेताः कर्मप्रकृतयो, यान्यानौदयिकभावानानीयाऽर्पयन्ति; तेषु तेषु भावेष्वासक्त्या, तदाकाररूपेण परिणम्य, तस्यानुभवं गृह्णन्ति; ततस्तस्याऽनुभवग्रहणे रागद्वेषौ विधत्ते, परवस्तूनि च संगृह्णाति, तानि वस्तुनि च स्वस्य जानीते, ममत्वेन च स न कस्मै ददाति, यदि च कोऽपि बलाद् गृह्णाति तर्हि, तेन सह; मरण-मारणस्य प्रवृत्तिं विदधाति; तादृशसमये मोहनृपस्य, मिथ्यात्वादिसुभटा आगत्य, तं विशेषप्रकारेण कर्मभ्यो बध्नन्ति, भक्ष्याऽभक्ष्यभोजनपानाभ्यां च लोभयन्ति, गम्याऽगम्येषु च कार्येषु प्रवृत्तिं कारयत्यर्थान्मदिरा-मांसादीन्यभक्ष्यवस्तूनि भुङ्क्ते, वाराङ्गना-परस्त्र्यादिभिः सार्धं गमनं विधत्ते, स्वास्त्रियां चातीवासक्तिं करोति, विषयानधिगन्तुं च जीवान् हन्ति, वदति चाऽसत्यं, चौर्यं च कुरुते धन-धान्य क्षिति-सुवर्ण-रौप्यादीनां संग्रहं करोति, तादृशसमये च क्रोध-मान-माया-लोभादिमोहनृपस्य सुभटास्तं रुन्धन्ति, स्वयमात्माऽस्ति तादृशज्ञानविस्मरणेन, देहमात्मत्वेन जानाति, ज्ञान-दर्शन-चारित्र 'दगुणस्तस्य सन्ति तथापि स्वयं, क्रोधी-मानी-कपटी-रागी-द्वेषीच भवति, तान् सर्वान् क्रोधादीन् स्वस्य गुणरूपत्वेन मनुते, पश्चात् स शरीरमानसादिभ्यो ऽनुकूलभूत-पञ्चेन्द्रियविषयेषु प्रवर्तते, तेषां विषयाणां चानुकूलत्वेन प्रीणयति प्रतिकूलत्वेनच तान् द्वेष्टि पुनरल्पप्रसङ्गे, तस्याऽभिमानं विकसति, पुनरथ मान-स्तवनयोर्महार्घ्यं निश्चिनोति, तादृशं च मानं यदि द्रव्येण लभ्यं स्यात्तर्हि तत्तु न विस्मरति, यदि च परिश्रमेण प्राप्यंतर्हि तत्प्रकारेणाऽप्यधिगच्छति पुनरथ लोभो गले लगति, येन केनापि प्रकारेण च द्रव्यं प्राप्तव्यमेव "विना वित्तं जनः पशुरिव" लोकोक्तिरियं यथार्था मन्यते, धनाय, विश्वासघात-लञ्चिका-कपट-प्रपञ्चान् विधातुं न विस्मरति, देश परदेशयोर्गच्छति, विधत्तेचाऽहोरात्रं परिश्रममकरणीयव्यापाराणि च करोति पुनरारम्भसमारम्भविधाने न बिभेति, चालयत्यनेके यंत्राणि, लावयति च वनानि, खानयति खनिं, भेदयति क्षितिं, विधत्ते च भाटकानि, दंत-लाक्षा-पशूनां मदिरादीना

महिफेनादीनां चापि व्यापारं निर्मांति, एवं तादृश्या प्रवृत्यां कृत्वा, पापतो धनमर्जयति, पश्चाच्च लोके सुधर्मित्वेन प्रसिद्धिं प्राप्तुं,
यशः किंवा वर्धयितुं धर्मनिमित्तत्वेन धनं व्ययत्यभिमानवृत्तितः, लोकप्रशंसया स्वात्मानं कृतार्थं गणयति स्थलेचाऽस्मिन्
धर्माऽभिधानं नवर्तते तथापि मिथ्याऽभिमानतो धर्मधौरेयगणनायै परिश्रमं कुरुते, कोपि च सत्यपथं दर्शयति तदास, स्वाऽप-
मानं बोधति, विशेषतश्च स्वार्थिगुरुपाशे पतित्वाऽधर्मं धर्मत्वेन स्वीकर्तुमारभते, सर्वाणीमानिच कर्माश्रवागमनकारणानि सन्ति,
आत्मधर्मसंबन्धयप्रमत्तताशिखरात् पतिताऽऽत्मनो जगति कीदृशी कीदृशी कदर्थना भवति तदनुभवस्त्वथास्मैजीवायाऽग्रे भवति,
पूर्वपुण्यबलेन किञ्चित् पञ्चन्द्रिय विषय-मान-सत्कारादयोऽनुकूलसंयोगा लभ्यन्ते तर्हि, तेष्वयं जीवः स्वस्य महत्वकृतकृत्य
त्वंच मन्यते, किंत्वद्याप्यात्मपथं प्रति न भृतं तेनैकमपि पदं, तथाप्यस्य वस्तुसमूहस्य मिथ्यासंग्रहस्तस्मिन् च ममत्वमा-
न्यता-विविधेच्छा-विविधकषायोत्कटत्वं-मानस-वचन-शरीराणां शुभाऽशुभप्रवृत्तय इमानि निखिलानि कर्मबन्धनकारणानि
सन्ति, यथा यथा चेमानि कारणानि जीवोऽयं सेवते तथा तथा तस्मिन्मोहो वर्धते, सत्यस्यचाऽवेदनेनाऽज्ञानमेधते, पुनरमू
दृशघोरकर्मणामाश्रवे निमग्नानां जीवानामुद्धारो न भवति, तथा चेमानि कर्मजनितद्रव्याणि मम, तथैवाऽहंच तेषामस्मि,
तादृशीबुद्धिर्यावन्न निवर्तते तावत्तस्मान्मिथात्वं न याति । ततः कर्मतो लभमानद्रव्याणां जडत्वमस्ति तेभ्यश्चाऽहं पृथगिति
यावन् ममत्वस्य च मतिर्नयायात्तावदात्मदृष्टिर्नैवागच्छति, ततः प्रथमेयं विस्मृतिर्भवेत्, यद्वस्तु स्वस्य नास्ति तस्मिन् जीवेन
स्वत्वं निश्चितम् अनया विस्मृत्यैव सहस्त्रविस्मृतयः कारिताः, यतो मार्गाद्विस्मृतिःप्राप्ता ततोनिवर्तनमवश्यं कर्तव्यमस्ति,
तदनन्तरमेवाध्वा हस्ते समागच्छति, देहस्याऽस्य स्वाम्यहमिमानि च वस्तूनि मदधीनानि, पुनरायतावहं तस्य स्वामी भविं-
व्यामीयं मिथ्या भ्रान्तिः, यदा च परवस्तु स्वकीयं स्वीकृतं तदाराभ्यैवं, जीवेनाऽनेन वक्रा गतिः स्वीकृता, तत्त्यागेनैव-सत्य

बोधो भवेत्तदनन्तरमेव सरलमार्गस्तस्य भवेदन्यथा कर्मागमनस्याऽयमेव मार्गः, आत्मभिन्नाश्च ये चेतनाऽचेतनपदार्थाः सन्ति, तेषु स्वत्वबुद्धिः कार्यं कुर्वत्यास्ते तावत्कर्ममार्गरोधो न भवितुं शक्यः, स्वरूपं विस्मृत्य, परवस्तुषु च सत्यतां मत्वा, तदर्थं यत् प्रवर्तनं, तदेव कर्मागमनद्वारोद्घाटनस्य सममस्ति। विधत्ते जीवः शुभाऽशुभपरिणामानिमानाश्रित्य, कर्माणि, तान् परिणामान् प्रति च प्रवाहरूपेणाऽऽयान्ति, पुनरिमानि कर्माणि सत्तायां संगच्छन्ते तत्पश्चाद्यदा तेषामुदयो भवेदेतावता तेषां कर्मणां स्वतन्त्रतया साम्राज्यं प्रादुर्भवेत्तदा स्वसदृशजातीनां कर्मणामामंत्रणं दत्वा, जीवस्य परिपार्श्वतस्तेषामेव विस्तारं कुर्वन्ति, तदनन्तरं ते न स्वल्पसमयमपि जीवं मुक्तं किंवा साद्वितीयं विदधति, यदि चाल्पसमयमप्यंजीवः कर्मसंवन्धि तीव्रोदयाद्विमुक्तो भवेत्तर्हि ध्रुवं स स्वस्य तथ्यस्वरूपं संस्मरति तदन्तरं च स्वयं महान् दुःखी वर्तते इति तस्य प्रबोधो जायते, पुनरिमानि कर्माणि स्वतः पृथक् विधातुं परिश्रमं कुर्यात् किंतु "यथा, अमात्यादयो निष्णाताधिकारिपुरुषा राज्ञोऽग्रे पश्चाच्च स्वीयजनानेव स्थापयन्ति, नृपश्चाऽन्यस्वविरोधिजनाना संबन्धं न प्राप्नुयात्तदर्थं, बहु सावधानत्वं हृदि स्थापयन्ति, यदिचान्यः कोपि मिलेत्तर्हि ध्रुवं ज्ञायते राज्ञा तथ्यवार्त्ता, तत्पश्चात् राजा तेषां जालं छिंद्यात् किन्तु तादृशप्रसङ्गो राज्ञःस्वजीवने कदाचिदागच्छेत्, तद्वन्मोहनृपेणाऽपि मिथात्वविविधेच्छाक्रोधादिकषायमनवचनशरीरादिपुरुषरूऽऽपात्ममहाराजनिकटे विरचितं जालम्, तस्मिन्श्चजाले तेन मोहनृपेण क्षिप्तोऽयमात्मा। यदि स पुनरेकाक्येव मुक्तो भवेत्तर्हि ध्रुवं धर्मनृपस्य "विवेक–सम्यक्त्व–ज्ञान–चारित्र–क्षमा–नम्रत्व–सरलत्व–संतोष–त्याग वैराग्येच्छा–निरोध–समिति–गुप्ति" इत्यादयो योधा आगत्य तस्य बन्धनानि छिन्दन्ति दुःखाच्च मोचयन्तिच, पुनरात्मप्रबोधं प्रादुष्कुर्युस्तथा तस्याऽधःस्थिताऽनन्तसामर्थ्यमपि प्रादुष्कुर्युः, किन्त्वेतादृशसद्भाग्यादिनं तस्य कुतः प्रादुर्भवेद्येनैतादृशसमर्थसद्गुरुशरणमाप्य, कर्मपाशात पृथकभवितुं यतेत। यथा प्रज्वलन्तं भानुं

मेघमण्डलमावृणोति तद्वज्जीवं मलिनकर्माण्यावृण्वन्ति । कर्म द्वेधा "द्रव्यकर्म भावकर्मच" कर्मस्वरूपेण परिणतः "पुद्गल
पिण्डः द्रव्यकर्म" द्रव्यकर्मणः फलं "भावकर्म" ज्ञानावरणादीन्यष्ट कर्माणि "द्रव्यकर्माणि" रागद्वेषक्रोधादीनि तु "भावक
र्माणि" कर्मभ्यामाभ्यां द्वाभ्यामपि जीव आच्छादितो वर्तते, यथाच सरसि सारणिद्वारेण जलमेत्य संगच्छते, तद्वत् कषायरूप
सारणिद्वारेण कर्माण्यागत्य जीवे तिष्ठन्ति, जीवे कर्माण्यानेतुं क्रोधादीनामुपयोगः क्रियते, यदिच क्रोधादिरहित
जीवे कर्माण्यागच्छेयुस्तर्हि कदापि कस्याऽपि जीवस्य मुक्तिर्न स्यादेव । एकद्रव्यपरिणामा अन्यद्रव्यपरिणामा न
स्युः यद्येवं भवेत्तर्हि स्वपरद्रव्यव्यवस्था न स्थिरा भवेत्, सन्ति च ज्ञानदर्शनादयः परिणामा आत्मनः, पुद्-
गलद्रव्यस्यतु रागद्वेषादिपरिणामाः । चेतनपरिणामा जडस्य, जडपरिणामाश्च चेतनस्य स्युरेवं न कदापि भवेत्, यदि चैवं
भवेत्तर्हि द्वयोर्जडत्वं किंवा द्वयोश्चेतनत्वं स्यात् न तदिष्टं केनापि प्रकारेण । कर्मबद्धात्मा, कर्मपरिणामेन, रागादिपरिणाममु-
त्पादयति किंतु शुद्धमुक्ताऽऽत्मा त्वेतादृशपरिणामेऽपि न परिणमति, स तु स्वस्य शुद्धस्वरूपेणैव परिणम्य तिष्ठति । परद्रव्यतः
सुखित्वभयं किंवा दुःखित्वभयमयं जीवो यावत् स्वीकरोति तावदाश्रवमार्गसंवरणं न भवति, परद्रव्यस्त्री–पुत्र–पति–धन–
धान्य–मान–यश–आदितः सुखित्वाशा, शत्रु–व्याधपपयश–व्याघ्र–सिंह–सर्पादितो दुःखित्वाध्यवसायोऽनुकूलतायां प्रमोदः
प्रतिकूलतायां शोक इमे सर्वेऽध्यवसाया रागद्वेषयोः सन्ति,पुनरध्यवसाया इमे कर्मागमन हेतवः–आश्रवाः सन्ति । वर्तते आत्मनि
सुखं, सुखकारणान्यपि चात्मपरिणामाः सन्ति, शुभ परिणामेन जीवः पुण्यमुत्पादयति, पश्यान्त्विदंपुण्यमपि "आश्रवः–कर्म"
स्याच्चथापि व्यावहारिकसुखस्य मूलकारणत्वेनेमे पुण्यवच्छुभपुद्गलाः सन्ति, तेषां विद्यमानतायामेव स्त्री–पुत्र–पति–धन–
लज्जा–यशः–कुटुम्बादीनि वस्तूनि सुखकारणत्वेन भवेयुः, तत्पुण्याऽभावे तु ये, स्वसान्निधावनुकूलसंयोगाःस्युस्तेपिचेयासुः

किंवा प्रतिकूलत्वेन परिणमेयुः किन्तु सुखाय न भवेयुः प्रत्युत दुःखाय स्युः, तस्य वस्तुनो विद्यमानत्वेऽपि पापोदयेन तस्याऽऽत्मनोऽशान्तेरेव कारणं भवेदेवं प्रत्यक्षतया ज्ञातुं शक्यमिदं वृत्तान्तं; तथापि जीवोऽयं वृत्तान्त मिदं ज्ञातुं किंवा तदपेक्षया न यतते, तर्हि पश्चादेतत्पुण्यमपि परद्रव्यं विश्वासघातकं नश्वरंचाऽस्ति, परिणामे च सदा शान्तिदायकं, यदात्मिक सुखं स्यात् तदेव तथ्यसुखं भवेत्तन् ज्ञातुं किंवा तदधिगन्तु जीवोऽयं कथं तत्परोभविष्यति, तेन व्यवहारे परद्रव्यं सुखदुःखयोर्निमित्तकारणमस्ति, किंतु वस्तुतयातु स्वाऽभिप्राया एव सुखदुःखयोर्हेतुभूताःसन्ति; तेषामेव सुधारणाऽवश्यंकर्त्तव्या स्यात्, तादृशशुभाऽशुभपरिणामेन परिणमनसंवरणं करणीयं, तत एवागच्छदाश्रवस्य रोधो भवेदेषामाश्रवाणां रोधाय, जीवायैतादृश तत्त्वज्ञानस्यातीवाऽऽवश्यकमस्ति, ज्ञानस्याऽस्याऽभावे, स्वपराऽचेतनदेहेऽपि चेतनत्वमारोपयति; तदधिगन्तुं किंवा तदुपभोक्तुं प्रयतते,ततोयावत् स्वकीय–परकीय–विनाशि–अविनाशि–सुखदायि–दुःखदायि–चेतनाऽचेतनानां भेदमयं जीवो नजानीयात्तावत् स परद्रव्ये, इष्टाऽनिष्टत्वबुद्धिं करिष्यत्येव, तावत्पुनराश्रवमार्गोऽपि भविष्यत्यपावृतः। नोद्‌भवन्त्युपयोगतः कषायास्तथैव कषायेभ्य उपयोगोऽपि न जायते, यो मूर्त्तिमान् भवेत् स नोत्पादयत्यमूर्त्तं, तथैव च योऽमूर्त्तिमान् स मूर्त्तिमन्तं नोत्पादयति, तेन कषायोपयोगयोर्जन्यजनकभावो न भवेत्, द्विप्रकारक उपयोगः, "ज्ञानोपयोगो दर्शनोपयोगश्च" पुनरिमावुपयोगौ चेतना शक्त्यनुयायिनौ स्तः, यत्र चेतना तत्र नियमतो ज्ञानदर्शने तिष्ठतः स्ते च ज्ञानदर्शनेऽमूर्त्ताऽऽत्मनोऽमूर्त्तगुणौ स्तः, क्रोध–मान–माया–लोभरूपकषाया मूर्त्तिमत्पुद्‌गलपरिणामाश्च सन्ति जडरूपा, आत्मभिन्नाश्च, तत उपयोगतः कषायोत्पत्तिः कषायतश्चोपयोगोत्पत्तिर्नजायते! कषायवज्जीवस्य कषायपरिणामो भवेद्यतः सजीवः तं परिणाममुत्पादयति, सिद्धजीवानामकषायवत्त्वात्तेषां कषायपरिणामा न भवेयुः, तथैव च केवलज्ञानिनामपि सर्वथा कषायपरिणामा न भवन्ति, ततश्चते कर्मबन्धनं न प्राप्नुयुः,

यदि च जीवोऽपरिणामित्वेन स्थातुं प्रयतेत तर्हि तेषां कषाया नोत्पद्यन्ते, कषायाणामनुत्पन्नत्वेन च तस्याऽपरिणामिधर्मे शनैः शनैर्वृद्धिर्जायते, पुनरभ्यासेन च कषायमूलविनष्टत्वे सति, स याथार्थ्येन, अपरिणामात्मस्वरूपत्वेन भूत्वा तिष्ठति; घातिकर्मणां संबन्धस्य दूरीभवने च, जीवेन सदाऽपरिणामित्वेन स्थीयते, केवलज्ञानिजीवानां, घातिकर्मणामभावत्वेन कषाया नोद्भवन्ति; ततश्चते, अपरिणामिनो भवन्ति, तेषां च जीवानां कषायत आगच्छदाश्रवस्य निवारणं भवति । जीवकर्मणोश्च परस्परगुणानां कर्तृत्वं न भवति; परस्परस्य च निमित्तत्वेन परस्परस्य परिणामोत्पत्तिर्जायते; तात्त्विकदृष्टया, निश्चयदृष्टया वा, जीवकर्मणोश्च स्वस्वगुणानां कर्तृत्वं स्यात्, जीवःकर्मचान्योऽन्यस्य गुणान् विधत्ते सा वार्त्तातु व्यवहाराऽपेक्षया । ज्ञानदर्शनादिगुणा जीवस्य, ज्ञानावरण–दर्शनावरणादीन्यावरणानि कर्मगुणाश्च वर्तन्ते । "मतिज्ञान–श्रुतज्ञानाऽवधिज्ञानादि–चक्षुर्दर्शनाऽचक्षुर्दर्शनावधिदर्शनादीनि" जीवस्य परिणामाः पर्याया वा सन्ति, "मतिज्ञानावरण–श्रुतज्ञानावरण–चक्षुर्दर्शनावरणाऽचक्षुर्दर्शनावरणादीनि तथैव क्रोधमानादीनि कर्मणां परिणामाः पर्यायां वा सन्ति पुनरत्र कर्म; जीवसंबन्धिज्ञानदर्शनादिगुणानां कर्तृ न, जीवोऽपि, कर्मसंबन्धिज्ञानावरणादि गुणानां नोत्पादकः; किन्तु कर्मनिमित्ततो जीवे, "मतिज्ञान–श्रुतज्ञानाऽवधिज्ञान–मनःपर्यवज्ञान–चक्षुर्दर्शनाऽचक्षुर्दर्शनाऽविधिदर्शनादयः" परिणामा उत्पद्यन्ते। जीवनिमित्ततश्च मतिज्ञानावरणादयश्चक्षुदर्शनावरणादयश्च कर्म परिणामा जायन्ते, ततं एष निश्चयो जायते, यन्निश्चयदृष्टया जीवः स्वगुणानां कर्ता, कर्माणि च स्वगुणानां कारकाणि, व्यवहारेण कर्म, जीवगुणानां कर्तृ, जीवश्च कर्मगुणानां कर्ता, यथा च जीवे पुद्गलाऽपेक्षया रागद्वेषादि भावा उद्भवन्ति, तद्वदौदयिकभावानामप्युत्पत्तिः पुद्गलाऽपेक्षया भवति, कर्मोदयतो भावो भवेत् "स औदयिक भावः" प्रोच्यते, तेऽपि जडपुद्गला एव, एतान् भावानपि यो मिथ्यात्वेन, मूढहृदयः, स्वीयत्वेन मन्यते स, सदा पापाश्रवं गृह्णाति

परपदार्थो मम, अहं न तेषामित्यभेदकल्पनाविधायकः, स्वत्वं परत्वंच ज्ञातुं न प्रभवेत्, अज्ञानमिदमप्याश्रवकारणमस्ति। यस्य मनोवृत्तिः "हिंसाऽसत्य–चौर्य मैथुन–धनादिसंचयेषु वर्तेत, सोऽविरतिः अचारित्री, विपरीतविधायकः, कर्माऽऽगमन कारणं भवेत्, "अविरतिः" एतावता चेच्छानिरोधमकुर्वता जीवेन स्वेच्छया प्रवृत्तिकरणमुच्यते, व्रतादिनियमा, इच्छानामु पर्यङ्कुशं विदधते, किंवाऽधिकविस्तारं लभमानामिच्छां रुन्धन्ति, पुनरेतादृशव्रतादिभिः कृत्वा नियमे, व्रतादौ वाञ्छाना-स्थापनम् "अविरतित्व किंवा मिथ्यावर्तनं" प्रोच्यते, कर्मणः शुभाऽशुभाश्रवागमनकारणमियमविरतिः, सम्यक्चारित्रं, किंवा पञ्चमहाव्रतादिष्वप्रवर्तकजीवः, रागद्वेषाभ्यां कृत्वापरद्रव्येषुशुभाऽशुभभावं–परिणामं वा विधत्ते तदा तस्मिन् जीवे मिथ्याचा-रित्रस्य विपरीतवर्तनस्य च विद्यमानत्वेन, तादृशपरिणामद्वारेण स, च पुण्याश्रवं किंवा पापाश्रवं गृह्णाति, स्थितौचाऽस्यां विद्यमानात्मनि, सम्यक् चारित्रं न भवेत् पुनरनेन शुभाऽशुभाऽऽश्रवेन सजीवो, नरक–तिर्यङ्–मनुष्यस्वर्गगतिषूद्भवति, तत्रच कर्मत उत्पद्यमानशारीरिक–मानसिक सुखदुःखयोरनुभवं करोति, विषयेभ्य एभ्य उत्पन्नं सुखं, देवगतौ लभ्यते, परं तत्, तृष्णां मानसिकसंतापंचददाति, ततो वस्तुतयातु तद्दुःखमेव, यत् सुखमानित्यं पीडाकारि–तृष्णावर्धकं कर्मबन्धकारकमिन्द्रिय-जन्यं पराधीनं चस्यात् तत्सुखं, ज्ञानिभिर्दुःखमेवोक्तम् जगत्यस्मिन् पञ्चेन्द्रियविषयसहितानि, यानि यानि सुखानि सन्ति, तानि निखिलानि, दुःखतः केनापि प्रकारेण विशेषतायुक्तानि, किंवा श्रेष्ठानि नसन्ति, तादृशं ज्ञानं यस्मिन्नाऽऽविर्भूतं सचारित्रवान् नैव प्रोच्यते, पुण्यपापयोर्द्वयोर्बन्धनत्वेन, तेद्वेऽपिसंसारछेदः कारणे स्तः, पापादपि पुण्यं विशेषत आत्मभानं विस्मारयति, कारणं चाऽभिमानस्य, गृहं प्रमादस्य, स्थानमविरतेः, विविधेच्छाप्रेरकं पोषकंच, पुनरात्मभानरहितं विशेष पापं कारयित्वा, दुर्गतौ स्थापकमस्ति, पापाज्जीवो दुःखी भवति, गलयति यतस्य जीवस्याऽभिमानं, तं च प्रबोधयति दुःखं, तंच दूरीकर्तुं मार्गमन्वेषयति,

विनय-विवेक-नम्रत्व-स्वाश्रयत्वानि शिक्षयति, पापस्यास्योदयेन संस्कारिजीवः प्रबुद्धो भवति, सुखीभवनमार्गे च स चलति, पुण्यत एवं पापोदयः कथाचिदपेक्षया योग्यः, अन्यथातु ये सन्त्याश्रवास्ते, आत्माच्छादकानि सिताऽसितान्यभ्राण्येव सन्ति, तस्मि-न्नपि यो जीवः, कषायभावे वर्तेत पश्चात्, कदापि पापारम्भं व्युत्सृज्योत्तमव्रतान् पालयति तथापि, तादृशजीवः कर्मतो मुक्तो नैव भवति, यतः स व्रतानि तु पालयति परं, कषायद्वारेण तस्मिन्नात्मनि पापाश्रवागमनंतु सततं भवत्येव, कषायाणामेषां विद्यमानत्वे पापारम्भत्यागश्चारित्रस्याचारणं वा किञ्चिदपि कार्यं विधातुं न प्रभवति, जीवस्य च रक्षणं न भवत्याश्रवात्ततः कषायत्याग-स्य मुख्यतयावश्यकमस्ति। काम-क्रोधादिदोषाणामुद्भवो भवेत्तथापि तैर्दोषैर्जीवेनसह कर्मणो यो संबन्धो भवति सनिश्चया-न्नभवति किंतु व्यवहारतो भवति। निश्चय-व्यवहाराभ्यां नयस्य द्वौ प्रकारौ, निश्चयः मूलस्वरूपस्य विषयकारकः, व्यवहारनयस्तु वाह्यसंबन्धस्य वाह्यविषयस्य च विधायको भवति, लोभमोहाद्युत्पत्तिः, न "निश्चयनयस्य" विषयः, एतदर्थं यो भवेत् स, पुद्गल परिणामरूपः पुद्गलस्य किञ्चिद्विशिष्टाकारं धारयति, तेनच परमाण्वादेर्भवन्त्याकृतिः सा, " मूलद्रव्यरूपमस्ति " तदा शुद्ध निश्चयनयेनात्मा "शुद्धःनिष्कलङ्कश्चाऽस्ति" तेन सह कर्मणो यः संबन्धो भवेत् स व्यवहारतोऽस्ति, यत आत्मा कर्म च द्वे द्रव्ये पृथक् पृथक् स्तः, ततश्च तयोरभेदसंबन्धो न भवेत् किंतु संयोगसंबन्धो भवति, तेन ते द्वे सह तिष्ठतः परमेतावता परस्पररूपेण, यथा पुद्गलः पुद्गलेनसह परिणम्य तिष्ठति, तद्वदात्मा कर्म च परिणम्य न तिष्ठति, तत एव कथ्यते यन्निश्चयत आत्मन्याश्रव निवारणं न भवति, परं व्यवहार दृष्ट्यातु भवति, कथनस्यास्यायंभावार्थो यन्मिथ्याज्ञानेन-विपरीतज्ञानेनसह, मानस-वचन कायानां संबन्धे ऽनेककल्पनाः प्रादुर्भवन्ति, वचनद्वारेणच ताः कल्पना वहिः प्रादुर्भाव्यन्ते, शरीरद्वारेणच, तत्कल्पना समं वर्तनं भवति वर्त्तनेनानेन सह पुनरिच्छाः, प्रवृत्तिरूपं धारयन्तिचा विरतिर्मिलति, अथ कल्पनायाः प्रवृत्तेः सामर्थ्यं वर्धते,

मानसादियोगतयासह क्रोध–मान–माया लोभानां संबन्धो भवति, बलमप्यथाखण्डप्रवाहेणाऽग्रे वृद्धिं लभते । स्थलेचास्मिन्ने-भिर्निखिलैः साधनैः कृत्वा, आत्मा, रागद्वेषादीन् किंवा शुभाऽशुभपरिणामभावानुत्पादयति, भावाश्चेमे कर्माऽऽश्रवेभ्योऽनुकूलमार्गं कुर्वन्ति, तेन च कर्माश्रवा एत्यैकत्रिता भवन्ति, तेषामुदयेन च पुना रागद्वेषादिभावाः परिणमन्ति, भावाश्चेमे, कर्माण्यात्मानं कर्षन्ति, एवमिदं कर्म कर्माऽऽश्रवप्रवाहत आत्मनः परिपार्श्वतो दृढदुर्गं वध्नाति, पुनरात्मा स्वप्रकाशं स्वस्मिन् स्थाप्यास्मिन् दुर्गे दीर्घकालपर्यन्तं चावृतस्तिष्ठति । यस्यात्मनः स्वपरयोर्जडचैतन्ययोर्विवेको भवेत्, शुभाऽशुभपरिणामान् तज्जन्याश्च विविधकल्पनाः प्रवृत्तीश्च यः पररूपेण जानाति तत्पश्चात्तानि सर्वाणि विहाय, स्वशुद्धोपयोगे स्थिरो भवेत् सएवात्मा, आश्रवप्रवाहमिममवरुध्य, तदनन्तरं कर्मदुर्गं च विनाश्य, स्वस्य च पूर्णस्वरूपेण विश्वे प्रकाशितो भवेत् ।

इतिश्रीतपगच्छीयगच्छाधिपतिश्रीमन्मुक्तिविजयगणिनां शिष्यश्रीमदाचार्यश्रीकमलविजयसूरीश्वराणां पट्टधरशिष्य श्रीमदाचार्य श्रीविजयकेशरसुरिणा विरचिते श्रीमहावीरतत्त्वप्रकाशाऽभिधानके ग्रन्थे–आश्रवाधिकारः, संपूर्णो जातः

## " कर्मबन्धाऽधिकारः "

मिलति यथा दुग्धे जलं, यथा च लोहे पावकस्तद्वत् क्रोधादिकषायेण मनो–वचन–शरीरसामर्थ्येणच, ये पुद्गला जीवेन स्वीकृतास्ते, आत्मनो निखिलप्रदेशैः सार्धं संमिल्य तिष्ठन्ति "कर्मबन्धः स, प्रोच्यते । पुद्गलरूपं कर्म, सन्ति च तस्मिन् "रूप–रस–गंध–स्पर्शादयः । यदाच कर्मयोग्यपुद्गलैः समं क्रोधादिकषायस्य मानसादियोगस्य च संबन्धो भवेत्तदा ते पुद्गलाः कर्मरूपेण परिणम्य पश्चादात्मप्रदेशैः सहैकरसतया भूत्वा तिष्ठन्ति "अथ बन्धः प्रोच्यते" बन्धादयं जीवः कर्माऽधीनो भवति । चतुर्धाऽयं बन्धः,–"प्रकृतिबन्धःस्थितिबन्धः रसबन्धः प्रदेशबन्धश्च"कर्मस्वभावः "प्रकृतिबन्धः"१ एतत्कर्मस्थित्यै कालप-

यदा-शुभाऽशुभाऽध्यवसायेन गृहीतकर्मदलिकानामुपभोगः कियत्समयं जीवेन विधीयते तन्निश्चयःस्थितिवन्धः२ कर्मपुद्गलानां शुभः किंवाऽशुभो घाती किंवाऽघाती यो रसः स "रसवन्धः ३ स्थितिरसाऽपेक्षां विना कर्मपुद्गलदलिकानां यद् ग्रहणं तद् ग्रहणं प्रदेशवन्धः, किंवा कर्मण आत्मनश्च प्रदेशानां परस्परं यथा मिलनंभवेत्तादृशः प्रदेशसमूहःस "प्रदेशवन्धः" ४ कर्मस्थिति-कर्मरस-कर्मप्रदेशानां त्रयाणां वन्धनां यः समुदायस्ततश्च ज्ञान-दर्शनेत्याद्यात्मिकशक्त्याक्रमणस्य यः स्वभाव उत्पद्यते स "प्रकृतिवन्धः" कथ्यते, कर्मणश्चाऽयं चतुर्धा वन्ध आत्मोपर्यावरणं विधत्ते। यदाच जीवो रागद्वेषपरिणाममुत्पादयेत्तदा-किंवा रागद्वेषावेकरसीभूय तिष्ठेत्तदा कर्मवन्धो भवति विना च रागद्वेषेण केवलं मनो-वचन-शरीरप्रवृत्तिविधानेन तादृशः कर्मवन्धो न भवति, तेन कर्मवन्धनमुख्यकारणे रागद्वेषौ स्तः, यावच्च रागद्वेषौ स्यातां तावदयं चतुर्धा वन्धो भवति यदि च रागद्वेषौ न स्यातां पश्चान्मानस-वचनशरीराणां प्रवृत्तिर्विधीयते तर्हिततस्तादृशवन्धो न भवति । रागद्वेषप्रमाणेन कर्मणां स्थितिवन्धो रसवन्धश्च भवति, मनो वचन-शरीरप्रवृत्त्या प्रकृतिवन्धः प्रदेशवन्धश्च भवति, वार्त्ताचेयं रागद्वेषौ मानसादिप्रवृत्त्या सह स्यातां तदा, किंतु केवलं मानसादियोगो भवेत्तर्हि मानसादिनाऽनेन भवेतां प्रकृति-प्रदेशवन्धौ किन्तु रागद्वेषतः प्रादुर्भवत्वन्धो या दृश आत्मने हानिविधायको भवेत्तादृशः केवलं मानसादियोगत उत्पद्यमानो न हानिकारक स्तत एव प्रोक्तं यद् रागद्वेषाऽभावे न भवेत् कर्मवन्धः । यस्य च शरीरं तैलघृतादिस्निग्धत्ववत्पदार्थैतो म्रक्षितं न स्यात् परं निर्मलं शुद्धं वा भवेत्तादृशो मनुष्यः सजीव निर्जीववस्तुनः, किंवा तदुभयमिश्रवस्तुनो भेदनं छेदनं वा कुर्यात् , तेषु वस्तुषु चेतस्ततो गमनाऽऽगमनं च कुर्यात्तथापि स कर्मणा न वध्यते, अत्र स्निग्धत्वराहितशरीरत्वेन तच्छरीरं धूल्या म्रक्षितं किंवा मलिनं न भवति, कथनाऽभिप्रायस्त्वयमस्ति यच्छरीरस्य धूल्यादितो म्रक्षितत्वे किंवा मलिनत्वे, मुख्य कारण स्निग्धत्वं भवति तदभावेतु शरीरं " मलिनं " न भवति, तद्व-

जीवोऽपि सजीव–निर्जीव–तन्मिश्रपदार्थान् नाशयति तथापि रागद्वेषस्वरूपस्निग्धत्वरहिततया पापतो न बध्यते, पापकर्मबन्धे मुख्यकारणत्वं रागद्वेषयोः, तद्विनाच बन्धो न भवति, यथा च स्निग्धत्वविशिष्टपदार्थतो म्रक्षितंशरीरामिव जनः स्वयं छेदन भेदनप्रवृत्तिं न विधत्ते किंतु तादृशी प्रवृत्तिर्यत्र भवति तत्र स्वयं तिष्ठति ततो, विविधरजसा तद्वपुर्मलिनं भवति तद्वत् , क्रोधादि-व्याक्षिप्तचित्तजनः, कस्यांपि प्रकारस्य पापारम्भं स्वयं न विधत्ते किन्तु, मानस–वचन–शरीराणां शुभाऽशुभव्यापाराणां मध्ये स्थितो भवति ततः सपापैर्बध्यते, शरीरतः छेदन–भेदनादिप्रवृत्तिं कुर्याद्वा न कुर्यात्तथापि तस्य शरीरस्योपरि तैलादिस्निग्धत्वस्य विद्यमानतया धूल्या स लिप्यते,तद्वन्मनुष्यः स्वयमारम्भं करोतु वा न करोतु तथापि तस्मिन् रागद्वेषादिबन्धकारणानां विद्यमानत्वेन जीवेन विना बन्धेन च स्थीयते। परमार्थदृष्ट्यात्वात्मनोऽरूपित्वमस्ति तेनारूप्यात्मानं हन्तुं नकोऽपि प्रभवति, तथैव न कोऽपि च जीवयत्यपि, नचकोऽपि दुःखाऽर्पणे सुखदाने च समर्थो भवति, नचकोऽपि रक्षति किंवा पीडयति तथापि जीवस्तादृशतादृश मारणजीवनस्योः सुखिदुःखिविधानस्य च परिणामान् निरन्तरं करोति, परिणामस्याऽस्य समये चाऽऽत्मप्रबोधो न स्याच्चत आत्मभानरहितोऽयं जीव एतादृशपरिणामान् विधायाहर्निशं विविधकर्माणि बध्नाति । सुख–दुःख–जीवन–मरण–रक्षण–पीडनान्येतानि सर्वाणि चाऽन्यजीवस्य, बद्धकर्मभ्य एव प्रादुर्भवन्ति तथापि सुखीकरिष्याम्यहमन्यं किंवा दुःखीकरिष्यामि, जीवयिष्यामि किंवा हनिष्यामि, रक्षयिष्यामि वा पीडयिष्यामीत्यादिविधानाऽभिमानिजीवेन तन्निमित्तत्वेन, तादृशतादृश परिणामाः स्वस्मिन्नुत्पाद्यन्ते ते च परिणामा नवीनकर्मबन्धने कारणरूपा भवन्ति। निश्चयदृष्ट्याऽऽत्माऽरूपी वर्तते, एतेन यथाकाशेऽरूपिण्यसिघातेन न छिद्यते आकाशस्तद्वदरूपिण्यात्मनि मरणत्वं छेदनत्वं वा नस्यात्, न च स सुखी किंवा दुःखी भवति, नच तं कोपि रक्षति किंवा पालयति, तथापि व्यवहारदृष्ट्या प्रोच्यते यदमुको मृतोऽमुकोमारितो, जीवितः किंवा सुखी

कृतो दुःखीकृतो वा, सुखी दुःखी वा, सर्वमेतद् व्यवहारनयेन सिद्ध्यति । संसारिजीवस्य शरीरसंबन्धेन कर्माणि बध्यन्ते, तेन कर्मणाच व्यवहारदृष्टितो जीवो मरति सुखी दुःखी किंवा मार्य्यते जीव्यते, सुखीक्रियते दुःखीक्रियते चेत्यादिनिखिलमेतत् सर्वं भवति, कोपि जीवः कस्मै किञ्चिन्न ददाति, एतदप्यपेक्षया यथार्थं, येभ्यः कर्मभ्य इमानि फलान्युत्पद्यन्ते तानि कर्माणि स्वयं जीवेन बद्धानि, तेषु चोदयागतेषु तेभ्यः सुखं दुःखं जीवनं मरणं वा प्रादुर्भवति, निमित्तकारणत्वेन तस्मिन्नन्यजीवा भवन्ति, किन्तु तात्त्विकदृष्ट्यातु यदि विचार्यते तर्हि सजीवस्तस्य स्वस्य कृतकर्मभ्य एव सुखी किंवा दुःखी भवति, अनयाऽपेक्षयाऽभिधीयते यद् " एकजीवोऽन्यजीवं मारयितुं किंवा जीवयितुं समर्थो न भवति " सुखीकर्तुं किंवा दुःखी कर्तुं च न प्रभवति । जीवेऽस्मिन्नेतावदज्ञानता वर्त्तते येनकृत्वा, स मन्येत यदहमेवाऽन्यं हनिष्यामि, मयैवान्यो मारितो मयैवाऽमुकोजीवीतोऽहममुकं जीवयामि किंवा जीवयिष्यामि, पुनरहमन्यं सुखिनं वा दुःखिनं करोमि, किंवा मयाऽमुकाः सुखीकृताः दुःखीकृता, अथवाऽमुकान् सुखीकरिष्यामि वा दुःखीकरिष्यामि, चैवं मारणस्य रक्षणस्य वा प्रसङ्गे, तस्य जीवस्य परिणामेषु रागद्वेषावुद्भवतः, आभ्यां च रागद्वेषाभ्यां कृत्वा प्रत्येकक्षणं जीवोऽयं नवीनकर्मबन्धं करोति अन्याऽधीनत्वेन जीवनस्य, मरणस्य, किंवा पीडनस्य, किंवाऽन्यस्मै सहायविधानस्य, मारणस्य, जीवितव्यदानस्य, दुःखीकरणस्य, विचारा भवन्ति ता, जीवस्य केवलं मोहादुत्पन्नाः कल्पना एव, किंवा ता मोहात् कल्पितास्तात्त्विकास्तु न । उपकारिण उपकारमनुभवता, किंवोपकारस्याऽपकारस्यवा प्रतिक्रियां गृह्णता, ददता वा सता, मोहेन कृत्वाऽयंजीवोऽनेकविधमिथ्याकल्पनाः पुनः करोति, परं यदाऽस्मै जीवायाऽऽत्मतत्त्वज्ञानं भवेत् तदा तस्य मोहस्तेनकृत्वा दूरीभवति तदास, एवमपि ज्ञातुमारभते यदहंतु केवलं चिदानन्दस्वरुपोस्मि, मयिचाऽन्यास्मिन् वा रागद्वेषादयो ये विकारा उत्पद्यन्ते ते, ज्ञानावरणादिकर्मभिरेव सन्ति, पुनरद्यावधि

मम विविधकल्पनाः केवलं तात्त्विकस्वरूपस्याऽभावेनैवाऽभवन्, तादृशप्रबोधाऽऽगमने सति, स्वस्यनिर्विकल्पस्वभावानन्दे स्थिरो भवति "नकोऽपि कस्याऽपि विदधात्युपकारमपकारंवा" पुनरहमन्यस्मोपकारमपकारवा करोमि बुद्धिरियं मिथ्या, परमेतत् स्वीक्रियते यन्निमित्तकारणरूपेणैकजनोऽन्यस्मै सुखदुःखं वा ददाति पुनरन्योन्यनिमित्तत्वेन सुखी दुःखी च भवति, परं तात्त्विकदृष्ट्या-यदि परामृश्यते तर्हि यावन्तो यावन्तः सङ्कल्पविकल्पाः क्रियन्ते ते सर्वे जीवकृता एव समुद्भवन्ति। मृत्घटविनिर्माणे, चक्र-कुम्भकार-रज्जु-दण्डादीनि वस्तुनि सहकारिकाणानि मन्यन्ते मृत्तिकोपादानकारण-मूलकारणमस्ति तद्वज्जीवाय सुख-दुःख-जन्ममरणादीनि यानि किञ्चिद् भवन्ति तदुत्पत्तौ मूलकारणमुपादानकारणंवा कर्म, तत्सुख-दुःखयोर्विधायका इतरजीवास्ते सहकारिणः निमित्तकारणानि सन्ति परमनेन सत्यकारणज्ञानाऽभावेनाऽयं जीव एवं जानीते यदहमन्यस्मै उपकारमपकारं वा करोमि, किन्त्वयं विचारः सर्वथा भ्रान्तिमान् मिथ्याच उपादानकारणरूपेणोपकारापकारौ विधायकंतु तस्य शुभाऽशुभं कर्म एव, यथाच मलः स्वसंबन्धेन वस्त्राणि मलिनानि करोति पुनरन्यं मलिनानि दर्शयति, तद्वन्मिथ्याज्ञानं चात्मनो ज्ञान-दर्शनचारित्रगुणान् स्वसंसर्गेण दूषयति, विश्वजीवास्तस्य जीवस्य ज्ञानादौ वैपरीत्यं पश्यन्ति, यथा च-जल-क्षारादिपदार्थ संसर्गतो वस्त्राणां मलो दूरीभवति पुनर्जनास्तानि वस्त्राणि निर्मलानि पश्यन्ति तद्वत्, सम्यक् ज्ञानादियोगेन बहिष्टादागत्य मिलिताः कर्ममलादयो दूरीभवन्ति तदाऽऽत्मा निर्मलो भवति जगज्जीवास्त च तस्य सत्यस्वरूपेण ज्ञातुं शक्नुवन्ति,

## " अनादिसंस्कारः "

जीवोऽयं त्रयाणां मिथ्याज्ञान-दर्शन-चारित्राणां प्रेमपूर्वकत्वेन स्वीकारं करोति, परं स्वभावतः सुवर्णस्येव निर्मलानां ज्ञान-दर्शन चारित्राणां च स्वीकारं न विदधाति। निम्नप्रदेशं प्रति जलप्रवाहः सहजतया वहति तद्वदथवाऽनुस्रोतासि चलन

मनादिकालाऽभ्यासेन सुष्ठु भाति परं सन्मुख पूरे गन्तारो जीवास्तु कियन्त एव स्युः ।

## " निरागी जीवो न बध्यते "

पङ्के वसन्नपि शंखो यथा श्यामो न भवति, तद्वन्निरागिजनः कारणतो दोषवदाहारं गृह्णाति किंवा, साचित्ताहारमभ्यवहरति तथापि स कर्मणा न बध्यते, सक्षुधत्वेन स्थितोऽपि रागिजनः पापकर्मणा बध्यते, पश्यन्तु तंदुलीयमत्स्यः, स्वयं स्वात्मना जीवं न हन्ति तथैव च नाऽपि भक्षयति तथापि, कषायदोषतः पापं बध्वा नरके याति, यथाच शुद्धसुवर्णं मलेन सहस्थित्वाऽपि मलेन नोपलिप्यते, तद्वद्विषयसंगे स्थित्वापि ज्ञानिनो विषयैर्न लिप्यन्ते, यो मुनिः स्वयमाहारं करोति पुनरन्येन कारयति कुर्वन्तं चाऽनुमोदयति स तन्निमित्तत्वेन बध्यते, किन्तु रागद्वेषस्याऽविधायको मुनिराहारादि कुर्वन्नपि न बध्यते, संयमसाधनरूपशरीरस्थिरतायै योगिनापि चाहारादि विधातव्यं स्यात्, परं तस्य तस्मिन्नाहारादौ निःस्पृहत्वेनाहारादिनिमित्तत उत्पद्यमानहिंसायाः पापं तं न स्पृशति परं, यदि तस्मिन् भोजनादौ तस्य रागः स्यात् तर्हि पापबन्धोऽवश्यं भवेत्, यदि च परवस्तुनि, स्थितैर्दोषैर्निरागिजीवोऽपि बध्यते तर्हि तत्पश्चात् तेषां जीवानां कदा कस्मात् कस्मिन् स्थाने शुद्धि र्भवेत् ? अर्थान्नैव भवेत् किन्तु तथा तु न, योजनो दोषं विधत्ते तद्दोषनिमित्तत्वेन स बध्यते, कश्चित् कर्म कुर्यात् पुनरन्यो बध्यते नैवमिति भवति, मन्यामहे यदि चैवं तर्हि, कदापि कस्यापि मोक्षो न भवेत्, ततो निरागिजीवः कर्मणा न बध्यते इत्येष नियमो निश्चितोऽस्ति, निरागियोगिजीवो विषयज्ञानेन न बध्यते, यद्येवं न स्यात्तर्हि विश्वस्य ज्ञातारः केवलिनोऽपि बध्येरन् परं ते न बध्यन्ते, जानन्ति ज्ञानिनः सर्वद्रव्याणि किंतु नाऽनुभवन्ति, निखिलद्रव्याणि, चा ज्ञानिनो न जानन्ति

परमनुभवन्ति तत एव ते बध्यन्ते, वस्तुनो यादृशं स्वरूपं भवेत्तादृशं यथार्थतया ज्ञानविधानं तदेव ज्ञानिभिर्ज्ञानमुक्तं, राग-द्वेष-मदक्रोधादिसहिततया यद् ज्ञानं तद् " अनुभवोऽभिधीयते " अर्थात्तस्मिन् ज्ञाने रागद्वेषविधानं तद् " वेदनम् " भवेत् ।

" द्रव्यसदृशाः पर्याया भवन्ति "

न भवति ज्ञानपर्यायोऽज्ञाने, तथैव च ज्ञानेऽज्ञानपर्यायो न भवेत्, लोहे न सन्ति सुवर्णपर्याया स्तथैव सुवर्णे च लोहपर्याया न सन्ति, पर्यायपर्यायवतोरभेदसंबन्धः लोहपर्याया लोहे वसन्ति, तथैव सुवर्णपर्यायाः सुवर्णे वसन्ति, तद्वज् ज्ञानपर्याया ज्ञाने तिष्ठन्ति तथैवाऽज्ञानपर्याया अज्ञाने निवसन्ति, तथैवाऽज्ञानजन्यबन्धो ज्ञानोत्पत्त्या न भवति, ज्ञानी ज्ञानपर्यायवानस्ति स पापबन्धं न विधत्ते, पुनरज्ञानी मनुष्योऽज्ञानपर्यायवानस्ति ततस्तस्य बन्धो भवेत्, पापबन्धेत्व ज्ञानं कारणं न तु ज्ञानं, ततश्चाज्ञानिभ्यः पापबन्धो भवति ज्ञानिभ्यस्तु न भवति, पुनरुदयागतानि कर्माणि स्वस्वभावस्येव सुखदुःखमर्पयन्ति तदा ज्ञानी तत्स्वरूपं जानाति, यदि च तत्स्थानेऽज्ञानिनो स्युस्तर्हि तत् सुखदुःखमनुभवन्ति रागद्वेषौ च तस्मिन् कुर्वन्ति, ततश्च ज्ञानिनः कर्माणि न बध्नन्ति पुनरज्ञानिनस्तु बध्नन्ति । सुखदुःखमेतत् कर्मफलमस्ति, उदयागतं कर्म, ज्ञानिने सुखं किंवा दुःखमर्पयति तदा स ज्ञानी जानात्येवं मन्यतेप्येवं यत् " सुखदुःखमिदं कर्मत आयाति तत्स्वामिने च सुखदुःखाऽर्पणं तस्य कर्मणः स्वभावः, नाऽस्म्यहं शरीरं किन्तु परमात्माऽस्मि सुखदुःखं शरीराय मनसे च स्वसामर्थ्यं दर्शयति न मां, मन्यते शरीरत्मत्वेनाऽज्ञानिजीवस्ततो यदा कर्म उदयमागत्य, सुखदुःखमर्पयति, तदा स सुखी दुःखी च भवति, ज्ञानिने रागद्वेषादियुक्तपरिणामाऽभावेन कर्मबन्धो न भवति, अज्ञानी तु सदाऽज्ञानेनोदयागतसुखदुःखयोः कषाययुक्त परिणामान् कुरुते ततश्च कर्मबन्धमपि विधत्ते ।

## " कर्मेत उत्पद्यमाना गतिः "

जीवाः कषाययुक्तपरिणामतः कर्म गृह्णन्ति, तत्कर्मबलेन च सुगतिं दुर्गतिं वा यान्ति, सुखाऽपेक्षया च देवगतिः सुगतिरभिधीयते, परन्तु तस्यां देवगतावपि कियतामधमदेवानां स्थितिः कुगतिः प्रोच्यते, मोक्षमार्गाऽऽराधनस्याऽनुकूल साधनानां मनुष्यगतौ विद्यमानत्वेन, मनुष्यगतिः सुगतिरभिधीयते, तिर्यग्नरकगती कुगती प्रोच्येते, तस्यां च धर्मप्राप्तिर्न भवति तथैवाऽज्ञानदुःखयोश्चाधिक्यं स्यात्, तिर्यग्गतौ, यद्यपि कियन्ति कारणानि प्राप्य, धर्मप्राप्तिर्भवति, किंतु तत्संख्याऽल्पाऽस्ति, सुगतिं दुर्गतिं वाऽधिगम्य, जीवस्तत्र नवीनशरीरं गृह्णाति, तस्मिन् वपुषि चेन्द्रियाणि समुत्पद्यन्ते, तैश्चेन्द्रियैर्विषय ग्रहणं कृते सति, रागद्वेषौ समुत्पद्येते, ताभ्यां रागद्वेषाभ्यां च कर्मसंग्रहो भवति, तत्कर्मसंग्रहेण जीवः संसारे परिभ्राम्यति, तत्परिभ्रमणेचानेकदुःखप्राप्तिर्भवति, ततश्च येषां दुःखभोगेच्छा न स्यात् तैः कषायत्यागः कर्त्तव्यः, कषायत्यागेना गच्छत्कर्माणि च रुध्यन्ते पुनरागच्छत्कर्मणां निवारणतः परिणामे मोक्षप्राप्तिर्भवति । यस्य सजीव–निर्जीवतन्मिश्रवस्तुषु रागादिककषायो भवेत् स प्रशस्तोऽप्रशस्तो वा स्यात् तर्हि ततः प्रशस्ताऽप्रशस्तपरिणामा भवन्ति, सुपरिणामस्य च फलं पुण्य रूपं, दुष्परिणामस्य च फलं पापरूपं समागच्छति, एते द्वे पुण्यपापरूपफले पुद्गलादुत्पन्ने, मूर्त्तिमती, सुखदुःखविधायके च । संसारिजीवानामेतादृश एकः स्वभावो वर्तते यथा, पुत्र–स्त्री–मित्र–स्वजन संबंध्यादिसजीववस्तु, वस्त्र–धन–सुवर्णा द्यजीववस्तु, सुवर्णादियुक्तस्त्रीत्यादिमिश्रवस्तु चानुकूलं प्राप्य, तस्मिन् रागं कुर्वन्ति तदा स्वप्रतिकूलेषु रिपु–कण्टक–कङ्कर –शीत ताप–रोगादिषु वस्तुषु द्वेषं विदधते, पुनरेतयोरिष्टाऽनिष्टयो रागद्वेषविधानपरिणामः समागच्छेत्तर्हि तन्निमित्तत्वेन जीवः पुण्यपापबन्धं करोति, पुनरनेन बन्धकारणेन, दीर्घसमयं संसारे परिभ्राम्यति ।

" पुण्यपापफलं मूर्तत्वेन भूत्वा भुङ्क्ते "

तयोःपुण्यपापयोः सुखदुःखफलं भोक्तुं जीवो मूर्तिमान् भवति, मूर्तकर्मणश्च फलमपि मूर्त्तं भवेत् तच्च मूर्त्तफलम् मूर्तिमानात्मा भुज्यते, कर्माणि पुद्गलानामेव विकाराः, भवन्ति च तस्मिन् "शब्द-रूप-रस-गन्ध-स्पर्शाः" स्ततस्तानि मूर्त्तानि, यादृशं चोपादानकारणं तादृशं कार्यं भवेत्, सुखदुःखयोरुपादानकारणस्य मूर्त्तत्वेन, सुख-दुःखरूपफलमपि मूर्त्तमस्ति, यश्च मूर्त्तिमान् स मूर्त्तफलं भुङ्क्ते, ततोऽयं निश्चयो भवति यथा, मूर्त्तकर्मफलस्य भोक्ता संसारिजीवः कथञ्चित् मूर्तिमान् प्रोच्यते, वर्तते चात्मा " अमूर्त्तः " तथापि पुण्यपापवशत्वेन समूर्त्तः स्यात्-यदा च स पुण्यपापतो मुक्तो भवेत् तदा अमूर्त्तत्वेन देहरहितः तिष्ठति-विकारिकर्माण्यात्मानं विकारिसदृशं कुर्वन्ति, तथाऽपि यथाऽऽकाशमभ्राणि विकारिणं विदधाति तेषामभ्राणा मपगमेन च पश्चादच्छ-स्वस्वभावमयो भूत्वा तिष्ठति, तस्यैव कर्मविकाराणां दूरीभवनादात्मना निर्मलशुद्धस्वरूपेण भूत्वा स्थीयते-

पुण्यपापस्य कारणानि"अरिहंत-सिद्धाचार्योपाध्याय साधु" रूपपञ्चपरमेष्ठिपरमभक्ते र्मानस-वचन शरीरतो विधानं,निखिल-जीवानामुपरि करुणाकरणं तेभ्यश्च द्रव्यभावतः सहायतार्पणं, भावसहायतातु, तेषु जीवेषु स्वात्माऽऽत्मशक्तेः प्रबोधनं, पुनः पवित्र चारित्रे प्रीतिकरणमेतत्सर्वं पुण्यबन्धकारणमस्ति । अरिहंत-सिद्धाऽऽचार्योपाध्याय-साधु-देशविरतिसम्यग्दृष्टीत्यादिपूज्य पुरुषाणां निन्दाकरण, जीवान्प्रतिच निर्दयत्वं, गर्हाचरणविधानं तस्मिन् प्रीतिस्थापनमित्येतत्सर्वं पापबन्धकारणं स्यात् । नित्यं-शाश्वतं सुखं ये जीवा न मन्यन्ते ते, मुग्धमतिमन्तो, पुण्यतः सुखप्राप्तिर्भवति पापतश्च दुःखलाभो भवति ततः पुण्यं सुष्ठुत्वेन, पापंच दुष्टत्वेन गणयन्ति, किन्तु पुण्यपापयोर्द्वयोः साम्यं, यतो द्वाभ्यामपि पुण्यपापाभ्यां जन्म-मरणरूप संसाराऽटव्यां परिभ्रमणं कर्त्तव्यं भवेत्, पुण्यतश्च जीवः किञ्चिदपि शुद्धत्वं न लभते, तत आत्मनैर्मल्यं दिदृक्षमाणैर्जीवैस्तु पुण्य

पापयोर्न काचित् विशेषता स्वीक्रियते । यो जनो विषयसुखात् प्रतिनिवृत्य, स्वस्य शुद्धस्वरूपे स्थिरतां विधत्ते स पुण्यपापद्वंद्वे:
पुण्यपापरूपेण प्रणमनपरिणामं त्यजति, यत इमे शुभाऽशुभपरिणामा एव, संसाराऽटव्यां दुःखरूपव्याघ्रमुखे जीवस्य नेतारः
सन्ति, परिणामानामेषांच विहायक एव कर्ममलाऽभाववान् भूत्वा शुद्धात्मानं च प्रादुष्कृत्य मोक्षं याति । आत्मकल्याणं
विधातुमिच्छूनां जीवानां विषयसुखतः प्रतिनिवर्तनमत्यावश्यकं यतो विषयवासनातो मनसि चाञ्चल्यं प्रादुर्भवति, यदाच
परिणामनिश्चलत्वं भवेत् तदात्मस्वरूपे स्थिरता भवेत्, यावच्चात्मनि निश्चलत्वं न स्यात् तावद्, वारंवारं जन्ममरणयोर्दाय
कयोः पुण्यपापयोः कर्त्तव्यबुद्धिं विहातुमयंजीवः समर्थो न भवति, यावच्च पुण्यपापयोस्त्यागो न क्रियते तावत्, कर्मबन्धप्रार-
म्भः सततं वहति, यावच्च कर्मबन्धप्रवाहो वहति तावन्महच्छान्तिदायकमोक्षलाभो नभवति, ततो मोक्षेच्छुभिर्जीवैर्विषय
प्रवृत्तिरादौ त्याज्या, पुनरात्मस्वरूपे च स्थैर्यं विधातव्यं स्यात् ।

इतिश्रीतपगच्छीयगच्छाधिपतिश्रीमन्मुक्तिविजयगणिनां शिष्यश्रीमदाचार्यश्रीविजयकमलसूरीणां शिष्यविजयकेशरसू-
रिणा विरचिते श्रीमहावीरतत्त्वप्रकाशाभिधानके ग्रन्थे बन्धाधिकारः संपूर्णः

## " संवराऽधिकारः प्रारभ्यते "

कर्मणामागमनमार्गनिवारणं " संवरः संवरस्याऽस्य द्वौ भेदौ " " एको द्रव्यसंवरो द्वितीयस्तु भावसंवरः " उत्पद्य-
मानक्रोधादिकषायाणां रोधः " भावसंवरः " तेषां क्रोधादिकषायाणां निवारणेन कषायत आगच्छत्कर्माश्रवस्य यो रोधः
स " द्रव्यसंवरः, कषायोपेतमानस–वचन शरीराणां शुभाऽशुभप्रवृत्तिविधानेन यानि कर्माण्यायान्ति स " आश्रव,: " तेषा
माश्रवाणां यन्निवारणं तत् " संवर,: " भावकषायाणां यन्निवर्तनं तद् " भावसंवर,: " तेषां कषायाणां रोधेन यत् कर्मद्रव्य

स्याऽऽगमनं रुध्यते तद् " द्रव्यसंवरः " प्रोच्यते । कषायतः कर्माणि समागच्छन्ति, कर्मतश्च कषायाः समुत्पद्यन्ते ततः, कर्म कषाययोर्द्वयोर्विनाशेनात्मनः पूर्णशुद्धिः प्रादुर्भवति, कषायः स " भावकर्म, " कर्मतु " द्रव्यकर्म " द्रव्यभावकर्मणोः परस्परं बीजवृक्षयोरिवोत्पादकसंबन्धोऽस्ति यथा चादौ बीजसत्ता किंवा वृक्षसत्ता, तदभिधातुं केनापि न शक्यते तस्येव "आद्यं द्रव्यकर्म, किंवा भाव कर्म " तदप्यभिधातुं नैव शक्यते, तथापि यथा वृक्षविनाशे तस्याऽग्रे परंपरा न चलति, तथैव कषायकर्मणो विनाशेनैधमाना तत्परंपरा विनश्यति, ततश्चात्मनः परमविशुद्धिराविर्भवति, कषायमलिनजीवः परद्रव्ये, जडमायायां वा प्रवर्तते, परद्रव्यप्रवर्तनेन " आत्मज्ञानमाव्रियते-आत्मज्ञानहानौ सत्यां, मिथ्यात्वं वर्धते ततः कर्मबन्धकारणरूपकषायाणा मवश्यमेव विवर्जनं विधातव्यम् ।

## " कषायदूरीकरणस्य साधनानि "

विविधहिंसामयारम्भाणां कषायाणां च विवर्जनं, जड-चैतन्योर्द्वयोः सुध्यानविधानं, पुण्य-पापयोरिच्छाया व्युत्सर्जनं, यस्मिन् लोकव्यवहारे धर्मो न स्यात् किंतु, भेडप्रवाहस्येव विनालक्ष्यं यद् गमनं तस्यापि त्यागविधानं लोकव्यवहारं प्रत्यौदासीन्यभजनं विशुद्ध-दर्शन-ज्ञान-चारित्रमयनिर्मलात्मनोऽन्तरात्मनो ध्यानकरणमित्येतन्निखिलानि कषायाणां दूरीकरणाय साधनानि सन्ति । कषायारम्भयोः प्रवर्तनं, जडचैतन्यज्ञानाऽविधानं, पुण्याऽभिलाषत्वं, लोकव्यवहाराऽऽसक्तित्वं विशुद्धात्मनो ध्यानाऽकरणमित्येतन्निखिलानि कषायवृद्धिकारणानि विनादूरीकरणेन, कषायाणां विनाशो नैव स्यात्, तत उपरि दर्शितानि कषायविनाशस्य कारकाणि साधनानि सेवनीयानि । पुद्गला एते " वर्ण-गंध-रस-शब्द-स्पर्शोपेताः " सन्ति, शुभाऽशुभाः, चेतनाऽचेतनानि मूर्तिमन्तश्च सन्ति, तेषामात्मनासह संबन्धाऽभावेन ते, कथं सुख-दुःखदाः ? अर्थान्नैव दातुं प्रभवन्ति, तथापि

तेषु पुद्गलेष्वज्ञानिजीवा रागद्वेषौ कुर्वते, नचात्मनो निग्रहाऽनुग्रहौ विधातुं कोपि पुद्गलः समर्थोस्ति, ततो निश्चयदृष्ट्या जीवैस्तेषु पुद्गलेषु कस्मिन्नपि स्थले रागद्वेषौ न विधातव्यौ । ये च पुद्गलपरमाणवो राग-द्वेष-क्रोध-मानादिभावकर्मरूपेण परिणताः सन्ति तदपेक्षया ते चेतनरूपा मन्यन्ते, पुद्गलेभ्य एतेभ्यो भिन्नमात्मस्वरूपं, तथापि प्रशस्तपुद्गलादिष्वज्ञानतया रागमप्रशस्तपुद्गलादिषु च द्वेषं विधत्ते ।

## "रागद्वेषौ क्व विद्ध्याम्"

मांप्रत्युपकाराऽपकारयोर्विधातारं यदाहं पश्यामि तदा, मयाऽन्यस्य किंवा तस्य चेतनशरीरं दृश्यते परं चेतनात्मातु न दृश्यते, तर्हि तत्कृतोपकाराऽपकारयोः क्व रागं क्वच द्वेषं कुर्यामर्थात्तस्मिन् देहे, रागद्वेषविधानं व्यर्थं भवति, शत्रु-मातृ-पितृ-स्त्री-स्वजन-भ्रातृ-स्वसृ-पुत्र-दुहित्रित्यादयः सर्वे संबन्धिनोऽस्य शरीरस्य साहयका भवन्ति किंवा तस्य विनाशका भवन्ति, किन्तु मां चेतनात्मानंतु, ते किञ्चिदपि कर्तुं न प्रभवन्ति, किल मूर्तिमच्छरीराणिचाऽमूर्त्ताऽऽत्मनेऽनुग्रहनिग्रहौ विधातुं न शक्नुवन्ति, तत्त्वतोऽहं चेतनस्वरूपोऽस्मि, ततोऽचेतनं शरीरं विभिन्नमस्ति ततस्तस्मिन् रागद्वेषविधानं, कथं युक्तत्वेन गण्यते ? पुनरहं, प्रमारीणां वा मित्राणामचेतनशरीराणि पश्यामि परमात्मानं निरीक्षितुं न शक्नोमि, तत्पश्चात्तयोरनुग्रहनिग्रहौ केन प्रकारेण कर्तुं समर्थो भवेयं ? शत्रुमित्रशरीरयोरुपकाराऽपकारविधानेन, तदात्मन्युपकारापकारौ न स्यातां, यतः शरीरादात्मा विभिन्नोऽस्ति । तच्छरीरस्याहं निग्रहाऽनुग्रहौ कुर्यां मन्ये तादृशी मम मतिर्व्यर्था अर्थात् ममाऽऽयासो निष्फलोऽस्ति ।

## "कर्तुः हर्तुश्च कल्पना मिथ्या"

अन्यः कोऽपि जनो मम गुणान् विधातुं वा विनाशाय न समर्थो भवेत् तस्येव, विधातुमन्यगुणान् वा विनाशाया

इमपि न समर्थोऽस्मि, कस्यापि गुणानहं कुर्याम् किंवा गुणविनाशं विदध्यामिति कल्पना मिथ्याभूताःसन्ति, पुनर्मोहाधीन जीवाएव मिथ्याकल्पना इमाः कुर्वन्ति, ज्ञानादिगुणा आत्मस्वभावास्ततस्तेषां विनाशो न भवति तेन. कस्यापि सम्यक्ज्ञानादि गुणानहमुत्पाद्याऽर्पयामि वा तद्गुणान् नाशयामि, कोपि च मम तान् गुणानुत्पादयत्यथवा नाशयति सर्वा स्तादृश्योऽज्ञानिनो मोहाभिभूतजीवस्य कर्तृत्वहर्तृत्वस्य कल्पना मिथ्याभूताः सन्ति। इन्द्रियविषया ज्ञानदर्शनचारित्राणि न विनाशयन्ति तस्यैव निरन्तरं सेवितगुर्वादयो न ज्ञानादिगुणान् विदधति वा नाऽर्पयन्ति, किंतु परिणामिजीवानां ते गुणाः स्वयं पर्यायरूपेणोत्पद्यन्ते, पर्यायरूपेण च विनश्यन्ति स्वयमपि तान् गुणान् विधातुं समर्थो न भवति तथैवचाऽन्योऽपि तान् गुणान् विनाशयितुं न समर्थो भवति। इन्द्रियविषयै र्ज्ञान-दर्शन चारित्राणि नश्यन्ति, गुर्वादिसेवातो ज्ञानादीनि प्राप्यन्ते, वार्त्तेयं व्यवहारदृष्ट्या यथार्था परं ता त्त्विकदृष्ट्यातु यदि निरीक्ष्यते तदा ज्ञायते यदात्मा यावत् परिणामी भवेत्-शुभाऽशुभोपयोगे परिणमेत् तावन्मतिज्ञान-श्रुत ज्ञानाऽवधिज्ञान-मनः पर्यवज्ञानत्वे, भूयोभूयः परिणमति. पुनरिमे परिणामा श्चैकापेक्षयाऽऽत्मन एव सन्ति, पुनरस्मिन्नात्मनो गुणा नवीनाः कुतोऽपि नागच्छन्ति, तद्वत्तस्य विनाशोऽपि न भवति, यदिच गुणस्य विनाशो भवेत्तदाऽऽत्मनोऽपि स्यात्, यतो गुणगुणिनोरभेदसंबन्धात्, वैभाविकगुणास्तु दूरीभवन्ति, किंतु स्वाभाविकगुणानांतु विनाशो न भवति, तथैव तस्योत्पत्तिर पि नस्यादात्मपर्यायेषु गौणत्व-मुख्यत्वे द्वे भवतः पर सर्वथा विनाशो न भवतीति कथनाऽभिप्रायः। शरीरेन्द्रिय-द्रव्य-विषय-वैभव स्वामि-सेवका एते सर्वे मम, तथा व्यवहारेणाऽभिधीयते परं तत्त्वतो न कथ्यते. यदि तत्त्वतो निश्चयतस्तानि शरीरादीनि जीवस्य स्युस्तर्हितान्यात्मतः पृथग् भवितुमपि न संभवेत्, भेदस्त्वयं प्रत्यक्षतया दृश्यते ततः शरीरादिवस्तूनि नाऽऽत्मन इत्येषा तात्त्विकदृष्टिः। य एवं स्वपरद्रव्यमवबुध्य स्वद्रव्यं च स्वत्वेन, परद्रव्यं च परत्वेन सदा मन्यन्ते ते चात्मद्रव्ये संलीना योगिनः

संवरं कुर्वन्ति, अर्थादागन्तुककर्माणि निवारयन्ति।

"द्रव्यपर्यायाऽपेक्षया फलभोक्तुर्विविधतां दर्शयामः"

एको जीवः किञ्चिच्छुभाऽशुभकर्म विधत्ते तस्य च फलमन्यो भुङ्क्ते इत्येवं न स्यात्, यो जीवः शुभाऽशुभकर्म विधत्ते स एव तस्य फलं भुङ्क्ते, वार्तेयं द्विविधा तथ्याऽपेक्षया, सोचाऽपेक्षा भवेदेवं, मनुष्य एकमनुष्यशरीरस्य पर्यायरूपेण स्थित्वा च तत्फलं देवो भुङ्क्ते, मुख्यत्वमत्र पर्यायस्य, आत्मद्रव्याऽपेक्षयातु मनुष्यगतौ स्थित्वाऽयं आत्मा पुण्यं विदधाति, स एवात्मा, देवगतौ तत्फलं भुङ्क्ते, भवतिचात्राऽऽत्मद्रव्यस्य प्राधान्यं, नयशब्दस्यात्र "अभिप्रायः" अर्थः, नयोद्वेधा "द्रव्यार्थिकः पर्यायार्थिकश्च" मूलद्रव्यं-वस्तु लक्ष्ये संस्थाप्य, यो वस्तुनिर्णयं विधत्ते-द्रव्य विषयं वा विधत्ते स "द्रव्यार्थिकनयः" यश्च पर्यायं प्रति लक्ष्यं समर्पय्य, पर्यायवार्त्ताः करोति पर्यायविषयं वा करोति "स पर्यायार्थिकनयः"

"द्रव्यपर्यायापेक्षयैकत्वमनेकत्वं च"

यदा चात्मना सह पर्यायार्थिकनयस्य संबन्धः संयुज्यते तदाऽऽत्मन एकत्वे सत्यप्यनेकाऽऽत्मानोऽभिधीयन्ते, यत आत्मा कदापि मनुष्यः कदापि च देवः कदाचित् तिर्यक् कदाचिच्च नारको भवेत्, तादृशाऽनेकरूपाणि धारयति तत, एकात्मोऽपि पर्यायाऽपेक्षया चानेके भवन्ति पुनरनेकतया स उच्यते। अथ च यदा द्रव्यार्थिकनयस्यात्मना सह संबन्धं संस्थाप्य निरूपणं विधीयते तदा स एकत्वेन व्यवह्रियते-अर्थान्मनुष्याद्यनेकस्वरूपाणामुत्पत्तौ सत्यामपि, तेषु निखिलेष्वात्मद्रव्यं त्वेकमेव, तत एवाधुना प्रोक्तं यत्पर्यायाऽपेक्षया कश्चित् कर्म विदधाति तत्फल त्वन्यः कोऽपि भुङ्क्ते। येन जनेनामुक प्रकारस्य शुभकर्म समुपार्जितं पश्चात् स मृत्वा देवोजातस्ततस्तेन मनुष्येण शुभकर्म विहितं तत्फलं च देवेन भुङ्क्तं, यतो

मनुष्यपर्यायतो देवपर्यायः पृथगस्ति । द्रव्यार्थिकनयाऽपेक्षयातु समुपार्जयति यः कर्म सएव तत्फलं भुङ्क्ते, येनाऽऽत्मना च मनुष्यगतौ स्थित्वा शुभकर्म बद्धं, स एवाऽऽत्मा देवत्वे उत्पद्य तत्फलं भुङ्क्ते, यतो य आत्मा मनुष्याऽवस्थायामासीत् स एवात्मा देवाऽवस्थायामस्ति, मूलवस्तुत्वेन य आत्माऽस्ति तन्मुख्यत्वोपेताऽत्राऽपेक्षाऽस्ति पुनरादौत्वात्मनो देहोपेत पर्यायाऽपेक्षाऽऽसीत् ।

## " अथाऽत्मनो नित्याऽनित्यत्वं प्ररूप्यते "

यदि च मन्यते नित्याऽनित्यस्वरूप आत्मा तर्हि पूर्वदर्शितं सर्वमपि कथनं सुसङ्गतिमञ्चति, किन्तु तस्यात्मन एकान्तनित्यत्वाऽनित्यत्वस्वीकरणे, द्रव्यपर्याययोरनयोरपेक्षा, केनापि प्रकारेण न संभवति द्रव्याऽपेक्षयाऽऽत्मैवं नित्यः, पर्यायाऽपेक्षयात्वनित्यः, देव-मनुष्य-पशु-पक्षि नारकादिपर्यायान् कीदृशान् कियतोऽपि धारयति ततस्तदपेक्षयाऽनित्यः, कियतोऽपि कीदृशानपि पर्यायान् धारये त्तथापि न भवति नाश आत्मनः, प्रत्येकपर्यायेषु चात्मनो विद्यमानत्वं तु स्यादेव, ततस्तदपेक्षया त्वात्मा नित्यः, यद्यात्मानं सर्वथा नित्यं कूटस्थं च मन्येमहि तर्हि तस्मिन् विविधपर्यायाणां विविधस्वरूपाणां वा धारणं न संभवेत्, यद्यथ सर्वथाऽनित्यत्वविशिष्टं मरणधर्मं वा मन्येमहि तर्हि " यः कर्म विधत्ते स भुङ्क्ते " न तत् सेत्स्यति, तथैव च सुखदुःखफलोपभोगे, फलदायककर्मणामुपभोगायाऽऽत्मन एवाऽभावो भविष्यति, नित्याऽनित्येयमवस्था, स्वानुभवविषयं समागच्छेत् तादृशी वर्तते, तेनाऽपेक्षयाऽऽत्मा कथंचित् नित्याऽनित्यत्वेन स्वीकर्तुं योग्योऽस्ति ।

## " औदयिकभावतो जीवः कर्मणः कर्त्ता भोक्ता च "

जीवोऽयमौदयिकभावोदयतः कर्म करोति भुङ्क्ते च, तस्य चौदयिकभावविनाशेन किञ्चिदपि कर्म न विधत्ते,

नापि च भुङ्क्ते। यदा च जीवः कर्म कुरुते तदौदयिकभावस्तास्मिन्निमित्तकारणं भवति, तेन यदाऽऽत्मनि नरक तिर्यङ्-मनुष्य देवगतयः क्रोध-मान-माया-लोभकषायाः, पुरुष-स्त्री-नपुंसकवेदाः, मिथ्यादर्शनाऽज्ञानाऽसंयमाऽसिद्धत्व-कृष्ण-नील-कापोत-तेजः-पद्म-लेश्या इत्येवं सर्वगणनयैकविंशतिरौदयिकभावस्योदयमायान्ति प्रकृतयस्तदा जीवः शुभाऽशुभकर्माण्यु त्पादयति, तेषां च सुख-दुःखादिफलान्यपि भुङ्क्ते, यदाचेयमौदयिकभावस्य सत्ता विनश्यति, तदा जीवो नवीन कर्माणि न बध्नाति, तेषां च फलान्यपि न भुङ्क्ते। विषयाः सुखदुःखयोर्दातारो न भवन्ति" अचेतनाः पञ्चेन्द्रियविषया अस्मै जीवाय किञ्चिदपि सुखं-दुःख वा दातुं न समर्था भवन्ति, परं जीवः स्वकल्पनया चैवं मनुते, यदिमे विषया मां दुःखं दद तीमे च विषयाः सुखमर्पयन्ति, "रूप-रस-गंध-शब्द-स्पर्शा "एते इन्द्रियविषयाः, पुनस्ते अचेतनाः सन्ति ततस्ते चेतना ऽऽत्मने सुखं दुःखं वा दातुं कथं समर्था भविष्यन्ति? तथापि जीवोऽयमज्ञानी विकल्पै स्तेषु सुखदुःखाऽर्पणस्यारोपं विधत्ते।

## "सङ्कल्पादिष्टाऽनिष्टत्वं भवति"

बुद्धिगम्यद्रव्यगुणपर्याया विना संकल्पेनात्मन इष्टाऽनिष्टाय न प्रभवन्ति, कस्याऽपि च द्रव्यस्य गुणे किंवा पर्याये ममत्वस्य किंवा परकीयस्य, शोभनत्वस्यवाऽशोभनत्वस्य, सुखदातृत्वस्य वा दुःखदातृत्वस्य सङ्कल्पोत्पत्यनन्तरमेव तेषु किंवा तेभ्य उद्भवद्भ्यः किंवा क्रियमाणेभ्यो रागद्वेषादिभ्यो जीवस्यानिष्टत्वमिष्टत्वं भविष्यत्येव। यदि च तेषु प्रश-स्ताऽप्रशस्तेषु द्रव्यगुणपर्यायेषु, तन्निमित्तत्वेन स्वल्पावपि संकल्पविकल्पौ न कुर्यात् तर्हि तन्निमित्तत्वेन, जीवस्य शोभनम शोभनं वा न स्यात्, ततोऽयं निश्चयो भवेत् यज्जीवस्येष्टाऽनिष्टयोः संकल्पविकल्पयोरेव हेतुत्वमस्ति। श्रवणपथप्राप्तानि गर्हा-स्तुतिवचनानि, जीवाय न काञ्चिदपि हानिं कुर्वन्ति यतस्तेषामात्मना सह न कश्चित् संबन्धस्तथापि गर्हास्तुतिवचन

दुःखदायकवन्धो ध्रुवं भवेत्, गर्हास्तुतिसंबन्धः
श्रवणेन जीवेन शोक-हर्षौ किंवा रागद्वेषौ क्रियेते तर्हि जीवाय दुःखदायकबन्धो ध्रुवं भवेत्, गर्हास्तुतिसंबन्धः
शरीरेण किंवेन्द्रियैः सह भवति तथापि जीवो, निष्फलौ रोषतोषौ विदधाति। निखिलानीमानि शुभाऽशुभरूपाणि वाह्यकारणानि
मोहदोषेण कृत्वैव सुखदुःखविधायकानि भवन्ति, यदि च मोहो न स्यात् तर्हि कस्मिन्नपि पदार्थे नास्त्येतादृशं सामर्थ्यं यज्जीवाय सुख
दुःखं वा दातुं शक्नुयात्, सुखदुःखयोर्निमित्तकारणंमोहस्तेन च कृत्वा जीवो, यदा तेषु तेषु पदार्थेषु रागं वा द्वेषं करोति तदा
तस्मिन् जीवे स्वपरज्ञानं विवेकज्ञानं वा न प्रबुद्धं भवेत्, ततस्तान् पदार्थानिष्टाऽनिष्टत्वेन संप्रधार्य चेष्टसंयोगेन स्वं सुखित्वेन
पुनरनिष्टसंयोगेन स्वं दुःखित्वेन संप्रधारयति, किंवा सुखी दुःखी च भवति, वास्तविकतयातु वचनेन नकोऽपि निन्द्यते वा स्तूयते,
यत आत्मा वचनातीतोऽस्ति वचनविषयो भवितुं नार्हति तथापि मोहसबन्धेन जीव एवं मन्यते यदनेन ममस्तुतिर्वा निन्दा
विहिता, यदीमानि वचनानि स न स्वीकुर्यात् तर्हि तत्प्रभावः स्वल्पोऽपि तस्य मनसि नोत्पद्यते, एकजनाय कोऽपि गालिप्रदानं
करोति तथापि श्रवणाऽभावेन स न गृह्णाति ततस्तत्प्रभावस्तन्मनसि नोद्भवति स्वल्पोऽपि, तस्यैव मनुष्यस्तस्य श्रवणं कुर्वा-
णोऽपि यदि तदुपेक्षां विधत्ते किंवा तत्प्रत्यौदासीन्य धारयेत्, किंवा श्रुतमश्रुतवा विदध्यात्तर्हि तत्प्रभावो न रागद्वेषरूपेण तस्मति
भवति। नाऽन्यदोषगुणावन्यस्मै विषादाऽऽनन्दौ विधातुं समर्थौ भवेतां यतस्तद्गुणदोषावन्यस्मिन्प्रवेष्टुं न प्रभवतस्तथापि
परगुणदोषौ निरीक्ष्य जीवोऽयं तस्मिन् रागं वा द्वेषं विदध्यात्तर्हि स्वस्याऽसहनशीलतारूपदोषेण कृत्वा स जीवः सुखी किंवा
दुःखीभवेत् पुनरमुकजनो ममेष्टाऽनिष्टं चिन्तयति तादृशी बुद्धीः किंवास्तादृशविचारा निष्फलाः सन्ति यतः परकीयचिन्तनेन
नाऽन्योजनः पीड्यते किंवा रक्षणमपि न प्राप्यते पुनरन्यजनोऽस्माकं शोभनमशोभनं वा चिन्तयेत् ततोऽस्माकं शोभनमशोभन
वा न भवेत्-यदि शोभनमशोभनं वा विना कारणेनैव भवेत्तर्ह्यस्मिन् विश्वे न कोऽपि सुखीस्यात् किंवा दुःखीस्यात्, यतः

किञ्चित् कश्चिदस्माकं शोभनमशोभनं वाऽवश्यमेव चिन्तयेत् परं याथाथ्यनतु शोभनाऽशोभनानि चास्माकं कार्याणि भवयुस्तर्हि तदधिकारित्वमस्माकमुपपर्यापतति तत्फलान्यप्यस्माभिरेव भोक्तव्यानि स्युः किन्त्वन्यस्य शोभनाऽशोभनविचाराणामस्माक मुत्तरदायित्वं नास्ति । तथैवाऽस्माकं शुभाऽशुभकर्मणां विना, कस्याऽऽशीर्वादेन किंवा शापेणास्माकं नकाचिदपि वृद्धिः वा हानिः संभवेत्, न च कस्याऽपि संपत्तिर्विपत्तिर्वा वर्द्धते किंवा न्यूनीभवति, यदिचान्यस्य शापेण किंवाऽऽशीर्वादेन भवेता मिष्टाऽनिष्टे तर्हि कस्य प्रचुरमित्राणि किंवा शुभचिन्तकाः स्युस्तदाऽस्य कदाप्यनिष्टं न भवेत् तथैव कस्याऽपि प्रचुरारयो विद्येरन् तर्हि ते तस्य सदैवानिष्टमेव चिन्तयेयुरेव, ततो निरन्तरं तस्याऽनिष्टत्वमेवस्यात् किंतु तथातु न दृश्यते, पुनरिष्टत्वमनिष्टत्वं वा जीवस्य तत्तत्कर्मणामिव संभवति ततः कस्याशीर्वादेन वा शापेणाऽन्यस्मै लाभाऽलाभौ न स्यातामिदं वृत्तान्तं हृदि ज्ञातव्यमस्ति। तत्त्वदृष्ट्या च यदि परामृश्यते तर्हि किञ्चिदपि द्रव्यमिष्टमनिष्टं वा नास्त्येव, किन्तु मोहेनाऽनिष्टत्वं प्रतिभातीष्टपदार्थेऽनिष्ट पदार्थे इष्टत्वेन च, शीततार्वुष्णसाधनानि सुष्ठुतया प्रतिभान्ति, तान्येव च साधनानि ग्रीष्मर्तौ शोभनत्वेन न प्रतिभान्ति, ग्रीष्म र्तुसंबन्धीष्टसाधनानि शीततौंचानिष्टत्वेन भवन्ति, युवावस्थासाधनानि वृद्धाऽवस्थायामनिष्टत्वेन भवन्ति, वृद्धाऽवस्था साधनानि च युवाऽवस्थायां न रोचन्ते, निखिलेष्वेतेषु मोहस्यैव प्राधान्यमस्ति वास्तविकतयातु पदार्थेषु न स्यातामिष्टानिष्टत्वे,

“ अस्त्यात्मा निर्मलः स्वतः सुखस्वरूपश्च ”

शंखः स्वभावत एव निर्मलः स्यात्, केन तस्य श्वेतत्वं विनिर्मितं ? नकेनापि—तद्वदात्मा स्वयं स्वभावत एव सुखस्वरूपः पवित्रो ज्ञानादिरत्नत्रयमयश्च, तस्याऽऽत्मनोऽन्यसहायताया अपेक्षा नास्ति । शंखः किंवा सुधाचूर्णं कस्य सहायतयाऽन्यस्य भित्त्यादिकमुज्ज्वलयति ? अर्थात्कस्याऽपि विनाऽऽश्रयं स्वयमेवोज्ज्वलयति, तस्येवात्मा, स्वयमेव स्वसामर्थ्येण जानाति—

पश्यति श्रद्दधाति च, पुनरन्यपदार्थाऽऽश्रयस्याऽपेक्षा न स्यात्, यतस्तद् दर्शनं-ज्ञानमित्याद्यात्मस्वभाव एव। मोहः स्वसंसर्गेण जीवं मलिनं करोति, रक्तपुष्पाणि किमुज्ज्वलस्फटिके रक्तत्वं न कुर्वन्ति ? कुर्वन्त्येव, रक्तपुष्पोपाधिरियं स्फटिकरत्नसन्निधानतो यदि दूरीक्रियते तर्हि, स्फटिकरत्नः स्वस्य सत्यस्वरूपेण प्रकाशः। तद्वदयं मोहो यदात्मनो दूरीक्रियते तदात्मा स्व-निर्मलस्वरूपेण प्रकाशितो भवेत्। एवं चात्ममलिनतायाः कारणमवबुध्य, दुःखबीजरूपमोहं ये त्यजन्ति ते जीवा, आगन्तुककर्मणां रोधरूपं संवरं करोति, ये च जनाः, शुभाऽशुभपरद्रव्येषु रागद्वेषौ विदधते ते सुदीर्घसमयं तपः कुर्युस्तथापि तेषां शुद्धिः केनापि प्रकारेण न भवति, एकोजनः स्नात्वाऽनन्तरमेव धूल्या लुठेत् तर्हि तत्स्नानं निष्फलं भवति, यतः स्नानविधानोद्देशो मलदूरीकरणं, तत्तु धूलिलुठनेन निष्फलं भवति, तस्यैव तपोनिर्माणोद्देशः कर्ममलं शोषयित्वा दूरीकरणस्य, स तु रागद्वेष-विधानेन न पारं लभते, तत आत्मविशुध्द्यर्थं चादौ रागद्वेषौ विहातव्यौ, यदि तत्त्यागो न विधीयते तर्हि कर्मफलोपभोगे, दुःखसंततिकारणरूपाण्यष्टविधकर्माणि बध्नाति, ये च कर्मणां सर्वथा पुद्गलरूपं ज्ञात्वा, तस्मिन्ननासक्तित्वेन ततो दूरीभवनाय प्रयन्तते ते सर्वकर्मवियुक्तत्वेन पुनरात्मस्वरूपे भूत्वा तिष्ठन्ति ये च शुद्धोपयोगे वसन्ति ते, कर्म न स्वीकुर्वन्ति पूर्वोपात्तकर्मणांच विनाशं विदधति, पुनर्येच मिथ्याज्ञानमलिनाः शुभाऽशुभोपयोगेन परिणम्य स्थिताः सन्ति ते पुनः कर्माणि गृह्णन्ति मुञ्चन्ति च।

## " प्रतिक्रमणतः संवरो भवति "

ये भक्तिसमन्विताः " सामायिक-चैत्यस्तव-गुरुवन्दन-प्रतिक्रमण-कायोत्सर्ग-प्रत्याख्यानेषु प्रवर्तन्ते तेषां संवरो भवति, समयशब्देनात्राऽऽत्मा भवति, स्थिरीभूयाऽऽत्मतत्त्वे, सर्वपदार्थेभ्यो रागद्वेषौ विजहाति "सा समभावस्थितिः "सामायिकः" १ भवति, समयशब्देनात्राऽऽत्मा

गृह्यते, तस्मिन्नात्मनि यद्वसनं तत् " सामायिकं " प्रोच्यते, तस्यामवस्थायां रागद्वेषाऽभावेन संवरो भवति, आगच्छत्कर्मनिवारणं " संवरः " संवरेणऽनेन सह कर्मनिर्जराऽपि भवेत्तथाऽप्यत्र संवरस्यैव प्राधान्यमस्ति। ज्ञान–दर्शन–चारित्ररूप–रत्नत्रयस्वरूपशुद्धचैतन्यमयस्य, कर्मोपाधिविमुक्तस्याऽऽत्मनो ये निरन्तरं स्तुतिं कुर्वन्ति तां ज्ञानिनः स्तुतिं वदन्ति, न कस्यापिदेहस्य स्तुतिः यथार्था किन्तु या विशुद्धात्मनः स्तुतिः सा वास्तविकी स्तुतिरभिधीयते ततश्चकर्माऽऽगमनं निवार्यते, चतुर्विंशतितीर्थङ्करस्तुतिः " चतुर्विंशतिस्तवः " २ कथ्यते, तस्यां च स्तुतावमुकतीर्थंकरविशेषस्तुतिरस्ति तथा शुद्धात्मनः स्तुतिविधानं तत्पवित्रात्मनः सामान्यस्तुतिरस्ति, द्वे स्तुती विधातुं योग्ये। पवित्र–ज्ञानदर्शन–चारित्रमयोत्तमात्मने मनो वचन–कायैर्वन्दनं "तद् वन्दना" ३ प्रोच्यते, वन्दनायामस्यामाचार्योपाध्यायमुनिरूपगुर्वादिभ्यो या वन्दना सा " विशेषरूपवन्दना " पवित्रात्मने विनानामरूपकल्पनां या वन्दना विधीयते " सा सामान्यरूपवन्दना " द्वाभ्यां सामान्यविशेषाभ्यां क्रियमाणा वन्दना लाभदायिका भवेत् तथापि, शुभोपयोगवती वन्दना पुण्यफलदायिका, शुद्धपवित्राकारपरिणतिरूपवन्दना संवरकारणं भवति।

पूर्वकृतकर्मभ्यो यानि कर्माण्यधुनाफलं दातुमागतानि, तेषां कर्मणामुपभोगे ममत्वस्य त्यागः कर्त्तव्यः, शुभाऽशुभसुखदुःखप्रसङ्गेषु ममत्वत्यागः "प्रतिक्रमणं" कथ्यते, पूर्वस्मिन्यदाऽनेनजीवेन कर्मबन्धोविहितस्तदा तस्याऽऽत्मभानं न प्रबुद्धं, ततएव कर्मबंधोजातः, पुनरेषा विस्मृतिस्तदैव प्रभवेद् यदाऽऽत्मा स्वयं स्वरूपेण प्रबुद्धो भवेत् पुनः स तदैवाभिधातुं शक्नुयाद् यथोदयागतानीमानि कर्माणि यूयं मम न स्थ, यूयमधुना मह्यं यत्सुखदुःखरूपफलं दातुं समागतानि तन्ममैव विस्मृतेरेवपरिणाम एवं विचार्य तानि समभावेन भुङ्क्ते, तेषां चोपभोगेन, नवीनकर्माणि न बध्नन्ति तन्नाम "प्रतिक्रमणमभिधीयते" प्रतिक्रमणमेतेन पश्चान्निवर्त्तनं, स्वभावं विस्मृत्य विभावे गत–स्ततः पश्चात् पुनः स्वभावे आगतस्ततस्तस्य नाम " प्रतिक्रमणमस्ति " ४ यो जनः शरीरं

कर्मजातमचेतनमन्ते विनाशधर्मकं च ज्ञात्वा,शरीरकार्येषु नातीव महत्त्वं ददाति, तथैव शरीरकार्येषु न च प्रवर्त्तते स मनुष्यः कायोत्सर्गं विधातु शक्नोति स च कायोत्सर्गसमये केनाऽपि प्रकारेण शरीरे ममत्वं न स्थापयति, पुनः स्थिरीकरोति देहं, धर्मध्याने च प्रबुद्धात्मः सन् प्रवर्त्तते स "कायोत्सर्गः" कायस्यउत्सर्गस्त्यागः, कायादुपयोगमाकृष्य तदनन्तरमात्मन्युपयोगस्थापनमात्माऽऽकारेणोपयोगपरिणामनं स "कायोत्सर्गः" ५। कर्मत आत्मभिन्नत्वस्य दर्शको जनो भविष्यकाले भाविबन्धननिमित्तरूप रागद्वेषादिभावान् विजहाति तत् "प्रत्याख्यानं" प्रोच्यते, प्रत्याख्यानशब्दस्य कोऽर्थः ?—उच्यते यैः परिणामैर्भवभ्रमणस्य कारकाणि कर्माण्यायान्ति तेषां तेषां भावानां त्यागः। ६ ये योगिनः प्रमादं विहाय, पुनरात्मतत्त्वे लक्ष्यं संस्थाप्य, षडिमा आवश्यकक्रियाः कुर्वन्ति तेषां कर्मणां संवरो भवति, मिथ्याज्ञानस्य विहायका आत्मनोऽनात्मश्च विवेकं विधाय सम्यक्ज्ञाने निमग्ना भवन्ति तेएवागन्तुककर्माणि निरोद्धुं समर्था भवन्ति।

## "द्रव्येण भावेन चात्मनो भोक्तृत्वम्"

ज्ञानिजनो द्रव्येण व्यवहारेण विषयान् भुङ्क्ते न तु भावतः. तदा चाऽज्ञानिजीवो द्रव्येण व्यवहारेण विषयान् न भुङ्क्ते किन्तु भावतो भुङ्क्ते, ज्ञानिजन आत्माऽनात्मयोर्भेदं जानन्नपि कर्मप्राबल्येन, तत्त्यागे स्वस्याऽसामर्थ्यतो, द्रव्यतो दर्शनमात्रेण, व्यवहारतः पञ्चेन्द्रियाणां भोजनपानादिविषयानुपभुङ्क्ते किन्तु तेषु, तस्यानासक्तित्वेन भावतो भोक्ता न भवति, ततः बन्धनं न विधत्ते, अन्याज्ञानिजनोऽज्ञानतया स्वस्य हिताऽहितौ न जानाति तथापि, द्रव्यतो व्यवहारत उपवासादिव्रतं विधाय, भोजनपानादिभोगान् जहाति, तथापि तेषु तेषु विषयेष्वासक्तित्वेन द्रव्यतस्तान् भोगान् न भुङ्क्ते तथापि भावतस्तु तेषां वस्तूनां भोक्ता भवेत्, स्वल्पसमयाय स्वल्पभोगान् विहायायतौ, दीर्घसमयाय प्रभूतभोगानर्जयितुमायासविधानं तदप्यभ्य-

न्तरासक्तिं सूचयंति, तेन च परिणामाऽनुसारेण कर्मबन्धो भवति, न केवलं बाह्यवर्तनस्योपरि कर्मबन्धाधारः किंतु भवेदाधारत्वं आभ्यन्तरपरिणामस्य, ततो व्यवहारेण च यो जनस्त्यागी भवति, तं व्यवहारपरायणा जना पूजयन्ति किंतु यो भावतस्त्यागी जातः स तत्त्वज्ञैर्मोक्षाऽभिलाषिभिर्जीवैः पूज्यते, व्यवहारज्ञजनाश्च व्यवहारपरायणमाधिक्येन मन्यन्ते, तत्त्वज्ञजनाश्च तत्त्वज्ञपुरुषेष्वधिकतां पश्यन्ति, तत्प्रमाणेनैव ततो लाभमप्यधिगच्छन्ति, यो जनो द्रव्येणैव व्यवहारतस्त्यागी जातः तस्याऽऽगच्छत्कर्मणां निवारणात्मकः संवरो न स्यात् किंतु यो भावतो निवृत्तस्तस्य ध्रुवं कर्मसंवरो भवति, वस्तुतत्त्वस्यैवं परमार्थं ज्ञात्वा, व्यवहारेण द्रव्यतो मनो-वचन-शरीरैः निवृत्तिं विधाय किंवा त्यागीभूत्वा सर्वथाऽऽगच्छत्कर्माणि रोद्धुं भावतो निवृत्ति विधानस्यात्यावश्यकमस्ति, द्रव्यतो विषयनिवृत्तिविधानाऽपेक्षया भावतो निवृत्तिविधानं श्रेष्ठं, किंतु केवलभावतो निवृत्तिकरणेन संवरो न सर्वथा भवति ततो व्यवहारेण द्रव्यतो मनोवचनकायानां निवृत्तिविधानस्याप्यावश्यकमस्ति ।

## "मोक्षलाभे वेषमुख्यत्वं नास्ति"

शरीरं जडरूपत्वेन यथाऽऽत्मतः पृथगस्ति तस्येव, साधूनां वेषश्चिन्हो वा जडरूपत्वेनात्मतः पृथगस्ति, ततस्तत्त्वदृष्ट्या यदि निरीक्ष्यते तर्हि साधुवेषो मुख्यकारणं नास्ति, मोक्षगतौ च यस्त्यज्यते वा मोक्षगमने यः सह गन्तुं न प्रभवति स मुक्तेर्मुख्यकारणं नाऽभिधीयते, नाऽपि च तेन मोक्ष लाभः संभवेत्, भिन्नकारणत्वे सत्यपि यदि साधुवेषो मोक्षलाभे कारणं स्यात्तर्हि पश्चादात्मभिन्नकर्माण्यपि मोक्षलाभे कारणत्वेन संभवेयुस्ततः साधुवेषरूपलिङ्गं मोक्षप्राप्तौ कारणं न भवति, व्यवहारे च साधुवेषः शरीरमेतच्च मोक्षस्य निमित्तकारणमस्ति किंतु निश्चयतः शरीरं किंवा वेषो मोक्षकारणं न, येन च सहाभेदसंबन्धो भवेत् तस्य मोक्षे विद्यमानत्वं स्यात्, पुनर्ज्ञान-दर्शन-चारित्राणामिव मोक्षे तस्यैव कारणत्वं गण्यते ।

## "संवराय किंकर्त्तव्यम्"

संवरार्थिजीवैः संवराय स्वात्मनि स्थितानां ज्ञान-दर्शन-चारित्राणां सेवा विधातव्या, निखिलानि च चेतनाऽचेतन वस्तूनि विहातव्यानि, रागद्वेषवियुक्त-सम्यक्ज्ञान-दर्शन-चारित्र भूतमात्मतत्त्वमस्ति तदेव च मुक्तिमार्गं, एवं यो जानाति स तद्विरोधिपरिणामानां त्यागात्मक-संवरतत्त्वं लब्धुं शक्नुयात् पुनरागच्छत्कर्मणां निवारणं विधातुं च समर्थो भवति ।

इति श्रीतपगच्छीयगच्छाधिपतिश्रीमन्मुक्तिविजयगणिनां शिष्यश्रीमदाचार्यश्रीविजयकमलसूरीश्वराणां मुख्य पट्टधर-शिष्यश्रीमदाचार्य श्रीविजयकेशरसूरिणा विरचिते श्रीमहावीरतत्त्वाभिधानके ग्रन्थे संवराधिकारः संपूर्णः संजातः ॥

---

## "अथ निर्जराऽधिकारः प्रारभ्यते"

पूर्वोपार्जितकर्मणां न्यूनांऽशत्वेन किंवाऽन्यूनांऽशत्वेन क्षयो विधातव्यः, तेषां च कर्मणामात्मतः पृथक् करणं "निर्जरा" प्रोच्यते, निर्जरायाश्चास्या द्वौ भेदौ "अकामनिर्जरा-सकामनिर्जराच" कर्मस्थितेः परिपक्वतया पूर्णत्वेन वा, यानि कर्माण्युदयमागत्य, स्वयं पृथक् भवन्ति सा "अकामनिर्जरा" पुनरियं निर्जरा महदमहत्संसारिजीवेषु प्रत्येकं प्रतिक्षणं भवेत्, कर्मस्थितेः पूर्णाऽपूर्णत्वे सत्यपि, तप-जप-ध्यानादिभिर्या सत्तायामस्ति तामुदयमानीयोपभुज्यते सा "सकामनिर्जरा-ऽभिधीयते, यानि कर्माणि दीर्घसमये उदयमागन्तॄणि स्युस्तानिकर्माणि,कर्मावधेः प्राक पुरुषार्थं विधाय, सन्निधावानीयचोपभुज्य, पश्चात् स्वस्माद्दूरीकरणं "सकामनिर्जरा" प्रोच्यते, संवरोद्भूतेरनन्तरमियं सकामनिर्जराऽऽयाति, सा च मोक्षलाभे मुख्य-साधनं स्यात्, कथ्यतेऽकामनिर्जरा सविपाकनिर्जरात्वेन, सकामनिर्जरा चाऽविपाकनिर्जरात्वेनाऽपि केन । अकामनिर्जरायां

यानि कर्माणि पक्वानि–फलं दातुं सन्मुखीभूतानि–बहिरागतानि पूर्णस्थितीनि च सन्ति तेषामेव कर्मणां क्षयो भवति, सकामनिर्जरायां तु, पक्वाऽपक्वयोर्द्वयोः कर्मणोः क्षयो भवेत् , वने च यथा दावानलप्रज्वलनेन, द्वावपि शुष्काऽशुष्कौ वृक्षौ दग्ध्वा भस्मसात्भवतस्तथैव ध्यानाऽभ्यासेन च पक्वाऽपक्वौ कर्मसञ्चयौ दग्धौ भवतः। कषायान्विहाय ये साधवो विशुद्धध्यानमभ्यस्यन्ति तेषां कर्मणां सकामनिर्जरा भवेत्, तथैव निर्जराया मुख्यकारणं ध्यानं, कषायत्यागेन ध्यानाऽवलम्बनतः सफलीभवति ध्यानं, येचात्मतत्त्वे रक्तीभूय कर्मसंवरं विधायचाऽहर्निशं ध्याने प्रवर्तन्ते,त एव कर्मनिर्जरां विदधति,विना संवरं कृत्वा च साधूनामपि सकामनिर्जरा न भवेत्, सत्यमिदं यन्नूतनजलं यदि सततमागच्छेत्तदा सरोवरं रिक्तं कुतःस्यात् ? यस्मिन् सरोवरे नालेन सततं जलं समागच्छेत् तर्हि तत् सरोवरं रिक्तं भवितुं न शक्यति तस्येव,यावत्कषायादिद्वारेण जीवसरोवरे कर्मजलं सततमागच्छेत् तावदात्मसरोवरं केन प्रकारेण शून्यं भवेत् ? नैव भवेदित्यर्थः, तेनागच्छत्कर्मणां निवारणात्मकः संवरो यावन्न विधीयते तावत् सकामनिर्जरा न भवति। आत्मस्वभावरूपज्ञान–दर्शनचारित्राणामेकाग्रध्यानेन कर्मक्षयो भवति,ध्याने च मनोमुख्यत्वं,तन्मनश्च जडमायायां वारंवारं धावत् धावत् तिष्ठति,तस्मात्तन्मनो यदा तत आकृष्य स्वात्मनि स्थाप्यते पुनस्तदनन्तरमात्मना ज्ञान–दर्शने चारित्रगुणे संयुज्येते तदा कर्मनिर्जरा भवति,किञ्च बाह्यपरिग्रह–धन-धान्य–स्त्री–पुत्रादिग्रन्थैराभ्यन्तरपरिग्रहरागद्वेषादिग्रन्थैश्च विहायको, लोकाचारतः पराङ्मुख इन्द्रियवशीकारको जनो मनः सङ्कल्पविकल्पशून्यं निर्माय, सर्वकर्माणि क्षालयति। "शुभाऽशुभ–शुद्धत्वेन" भावा अध्यवसाया वा त्रिधा, तेष्वाद्यौ शुभाऽशुभौ द्वौ भावौ च विहाय,पुनरन्तिमशुद्धभावं यो धारयति तस्य कर्माणि क्षयन्ति। शुभभावतः पुण्यबन्धोऽशुभभावतः पापबन्धो विशुद्धभावान्निर्मलत्वं च भवेत्, येषां च भावाः शुभाऽशुभाः स्युस्ते पुण्यं वा पापं समुपार्ज्य,चतुर्गतिषु सततं भ्राम्यन्ति किन्तु विशुद्धभावतः कर्मनिर्जरां विधाय मोक्षमधिगच्छन्ति। विशुद्धात्म

तत्त्वज्ञानेन विना बाह्यतपसः किंवाऽऽभ्यन्तरतपसो विधानतो न निर्जरा भवति, परं शुद्धात्मतत्त्वस्य ज्ञानाऽनन्तरमेव बाह्यतपसः किंवाऽऽभ्यन्तरतपसो निर्माणेन कर्मनिर्जरा भवति, पुनः तदेव तपो यद्यज्ञानपूर्वकत्वेन निर्मीयते तर्हि पुण्यकर्मणो बन्धो भवति, तपोविधायकजनैः प्राक् चात्मनो विशुद्धस्वरूपमवगम्य, तदनन्तरं विधातव्यं तपः, आत्मतत्त्वमवबुध्य पश्चाद् वीतरागदेवैर्निर्दिष्ट पवित्रसयमपथस्य पालनतः कर्मनिर्जरा भवति, विनाचात्मस्वरूपज्ञानेन संयमाऽऽदरेण पालनेनवाऽपि न भवेत् कर्मनिर्जरा तथैव चात्मस्वरूपमवगम्याऽपि विनासयंमपालनेन कर्मनिर्जरा न स्यात्, ततः सकामनिर्जराकरणे चात्मज्ञानस्य तेन च सह पवित्रसंयम पालनस्यावश्यकमस्ति, तयोश्चद्वयोः सहनिवसनेन कर्मनिर्जरा भवति। लोकाचारो यो वर्तत कियद्भागेन भेडप्रवाहस्यैव तं च विहाय, पुनरात्मतत्त्वाऽऽचरणे आदरवान् भूत्वा, संपूर्णसयंमयुक्तयोगी कर्मनिर्जरां विधत्ते, यश्च लोकोत्तराचारो ज्ञानिपुरुषेणो-पदिष्ट आत्ममार्गाऽनुकूलश्चस्यात्तं विहाय, यो भेडप्रवाहात्मकलोकाचारमाचरति, तस्य निर्जराकारणसंयमो विनश्यति, ये च पवित्रचारित्राचरणं समाचरन्ति तथापि वास्तविकतया निश्चयव्यवहारात्मके ज्ञानिनामपेक्षावादे श्रद्धां न विदधते तेषामात्मशुद्धिर्न स्यात्, यत् पवित्राचरणेन सह ज्ञानस्य, विद्यमानत्वं तदेव शुद्धभावे कारण भवेत् तथाच ज्ञानेनसह दर्शनस्वरूपश्रद्धाया आवश्यकम स्ति,न च प्राप्यते पूर्णत्वं केवलज्ञानेन केवलदर्शनेन किंवा केवलचारित्रेण,परं तैर्ज्ञानादिभिस्त्रिभिः सह संबन्धयुक्तो यो मार्गः स एव "मोक्षमार्गः" ततएव च पूर्णत्वं प्रादुर्भवति। यः संयमी समादरणीयविविधाचारे प्रवर्तते तथापि ज्ञानिजननिश्चितसिद्धान्त ज्ञानवान् न भवति स केवलमन्धजन इव भवेत्, विना ज्ञानेन केवलं चारित्रं नोपयोगि भवति, यथाऽन्धजनस्य कीदृश्यपि सुप्रवृत्तिर्भवेत्, तथापि, विनाऽक्षिणी स सदा योग्यमार्गे यातुं न प्रभवति, कदापि च स काकतालीयन्यायेन, योग्याऽध्वनि समा-गच्छेत्तथापि तत्प्रवृत्तिः स्वपरोपयोगिनी तु नैव स्याद्, अन्धजनः 'परं पथितु नैव समारोहयितुं समर्थो भवेद् अतश्चारित्रेणसमं ज्ञान-

स्यापि सोपयोगित्वंस्यात् । पुनरस्ति श्रुतज्ञानं साधुनेत्रम्, एकेन्द्रियादिजीवानामिन्द्रियं नेत्रकार्यं करोति, देवानांचावधिज्ञानरूपाणि नेत्राणि, निर्वाणमधिगतानां च जीवानां केवलज्ञानरूपाणि नेत्राणि सन्ति, सिद्धान्तरूपनेत्रैः साधवः पश्यन्ति तद्द्वारेण च प्रबोधमधिगम्य वर्द्धन्ते आत्मज्ञानाग्रे, देवाश्च निजहिताऽहितमवधिज्ञानेन जानन्ति पुनः सिद्धजीवास्तु सर्वनेत्रवन्तः केवलज्ञानतो विश्वं पश्यन्ति, तत आगमविहिताऽनुष्ठानकरणं " निर्जराकारणं भवति "

## " यत्राऽज्ञानी बध्यते तत्र ज्ञानी मुच्यते "

यत्रेन्द्रियविषयसेवनेनाज्ञानिनो बध्यन्ते तत्रैव ज्ञानिनः कर्मणां संसर्गतो मुच्यन्ते, तत इदं यादृशंतादृशमाश्चर्यं न, शुभाऽशुभविकल्पैः शुभाऽशुभकर्म समागच्छति, परं द्वयोरेकविधस्याऽपिविकल्पस्याविधायकः सर्वद्रव्योपभोगं विदधाति तथापि निर्जरां करोति, प्रशस्ताऽप्रशस्तत्वेन पदार्थाणां स्वीकारतो रागद्वेषावुत्पद्येते, ताभ्यां रागद्वेषाभ्यां च कर्मबन्धः प्रादुर्भवति, पदार्थस्य च भोगोपभोगं कुर्वाणोऽज्ञानिजनस्तस्मिन् रागद्वेषविधानेन बध्यते, ज्ञानीतु तस्मिन् पदार्थभोगोपभोगे मध्यस्थ उदासीनो वा तिष्ठति ततस्तेन बन्धोऽपि न लभ्यते, पूर्वकर्माणि चोपभुज्य, निर्जरामात्मोज्ज्वलतां वा निर्माति ।

## " ज्ञानिनां मन्तव्यमभिधीयते "

नास्म्यहं कस्यापि ममापिचान्यः कश्चिन्न, तादृशदृढमतिज्ञो योगी निखिलानि कर्माणि वेपयति, मदीयत्वदीयस्वरूप विकल्पेषु दूरीभवत्सु सत्सु, स्वस्वरूपे जीव आगत्य तिष्ठति, पुनरेतस्याः स्वरूपस्थिरतायाः प्रखरोष्णतया कर्मरसः शुष्यते, रसस्य दूरीभवनेन, यथा पवनवेगतः शुष्काणि पर्णानि वेपमानानि पतन्त्यधस्तस्यैव कर्मणां निर्जरा भवति वाऽऽत्मतः पृथग् भवन्ति तथाभवनेन चात्मन उज्ज्वलत्वं स्यात् ।

## " शुद्धात्मन उपासनां कुर्वन्तु "

शुद्धनिर्मलात्मानं विहाय येऽन्याऽन्यजडसाधनानि सेवन्ते ते रागिद्वेषिदेवानुपासते, मोहवद्धगुर्वादीनामालम्बनं गृह्णन्ति तेऽज्ञानिजनाः, यथा शीतनिवारणोपायमग्निं परित्यज्य, 'हिमोपासनाविधानमिव कुर्वन्ति, यथा शीतापनोदोपायः पावकोऽस्ति तद्वदात्मनो निर्मलीकरणोपायः शुद्धात्मनः सेवाकरणमस्ति,सत्यमिममुपायं त्यक्त्वा, ये शीतनिवारणाय हिममुपासते तेभ्यस्तल्लाभदायक भवति प्रत्युत हानिकारकं स्यात्,तस्यैव शुद्धात्मनं विहाय परमशान्तिमधिगन्तुं विषयोपासना लाभापेक्षया विशेषहानिकारिका भवति, कर्मतो न मोचयति प्रत्युत विशेषप्रकारेणात्मानं बन्धने क्षिपति, तथैव रागद्वेषपोषका गुर्वादयोऽपि बन्धनान्न मोचयन्ति प्रत्युत विशेषतया बन्धने नयन्ति, ततो मोक्षार्थं शुद्धात्मोपासनाकरणं योग्यसाधनमस्ति ।

## " परमात्मा देहे वर्तते "

आत्मैव परमात्मा भवति, तेन परमात्माऽस्माकं देहे एव विद्यते तथापि, तं देवं ये बहिरन्यस्थले गवेषयन्ति तदर्थमहमेवं मन्ये यत् स्वगृहे पक्वान्नस्य विद्यमानत्वेऽपि ते मूढमतयो जनाः भिक्षायै बहिर्भ्राम्यन्ति। यावत्कर्मणा समं बद्धोऽयं जीवस्तावत् स संसारीजीवो व्यपादिश्यते, कर्मणां दूरीभवनेनात्मनः शुद्धस्वरूपमाविर्भवति तदेव च परमात्मत्वं भवेत्, पुनराशयमिममुपलक्ष्य, शास्त्रकर्तारो ज्ञानिन एव मुपदिशन्ति यथा–यदर्थं यूयं बहिरन्वेषयथ स परमात्मा भवतां देहे एव स्थितोऽस्ति, तस्य च प्रादुष्करणं विहाय बहिर्यूयं कथं भ्राम्यथ ? स परमात्मा भवतामात्मत एव प्रादुर्भविष्यति न च बहिष्टात् कुतोऽपि समागमिष्यति ।

## " कषायेण जीवो बध्यते "

क्रोधादिकषायोद्भूतकर्मरज्जुभिर्जीवो बध्यते, तान्येवच बंधनानि कषायोपशमत्वे सति स्वल्पेनैव समयेन त्रुट्यन्ति,

कर्मबन्धनेषु बन्धनकारणानि कषायाः सन्ति तान्दूरीकर्तुं पुरुषार्थविधानमावश्यकं, बध्यन्ते जीवाः स्वस्य कुटिलकार्यैः पुनर-कुटिलकार्यैश्च मुच्यन्ते ।

## " प्रमादतोऽयं जीवो बध्यते "

स्वस्मिन् प्रमादनिवसनायाऽवकाशदाता जीवः सर्वत्र पापैर्बध्यते तस्यैव प्रमादस्य स्वतो बहिर्निष्कासनेन, प्रमाद दोषान्मुक्तःसन् बन्धनतो मुक्त आत्मा भवति, मदिरा,-पञ्चेन्द्रियविषयाश्चत्वारः कषायाः, निद्रा,-स्त्री-देश-भोजन-राजकथा स्वरूपविकथा इत्येतत्स्वरूपः प्रमादोऽभिधीयते, प्रमादेऽस्मिन् जीवनप्रसारकजीवो यत्र याति तत्र कर्मणा बध्यते, स एव जीवो यदा प्रमादं विहाय,-प्रमादविरोधिनीमप्रमत्तदशामात्मजागृतिदशां वा स्वनिवासस्थानत्वेन विरचयति किंवा सदात्मनः प्रबुद्ध दशारूपाऽप्रमत्तदशायां निवसति तदा जीवो यां यां प्रवृत्तिं निर्माति ताः सर्वप्रवृत्तयो निवृत्तिरूपेण भूत्वा कर्मबन्धनानि त्रोटयन्ति ।

## " आत्मतीर्थे स्नानं कुर्वन्तु "

आत्मस्वरूप-निर्मल-पवित्रतीर्थं विहाय, ये जीवा आत्मशुद्ध्यर्थं जलाशयाद्यन्यतीर्थे स्नानं कुर्वन्ति तदा मन्येऽहं ते मलिनजनाः सरोवरं त्यक्त्वा कर्दमविशिष्टपल्वलमाश्रयन्ति, न च भवन्ति नदी-समुद्रास्तात्त्विकतीर्थाः किन्तु " यस्तारयति स तीर्थः" इतिव्युत्पत्त्या, विनात्मना न कोऽपि तारकस्तत आत्मैव तात्त्विकसुखरूपतीर्थः स्यात्, ततो निकट-मात्मतत्त्वं विहाय, ये आत्मशुद्ध्यर्थं नद्यादितीर्थे प्रयतन्ते ते सत्यमार्गस्यावेदकाःसन्ति, विधास्यन्ति नदीजलानि शरीरशुद्धिं, ग्रीष्म-तापं चोपशामयिष्यन्ति जलपिपासां च दूरीकरिष्यन्ति किन्तु नैवात्मजागृतिं तु दास्यन्ति, पुनः क्रोधादिग्रीष्मतां नैवोपशामयेयुः

मनोनैर्मल्यं च नैव विदध्युः, क्रोधाद्युपशामिका तु संयमजलभृतात्मनदी भवेत् ।

" विघ्नान् सहध्वम् "

स्वात्मनि स्थैर्यं विधातुमिच्छुभिर्जनैर्ये ये विघ्नाः समागच्छेयुस्ते ते समभावेन सोढव्याः, ये ये च परिसहाः किंवोपसर्गाआयायुस्तान्सोढुमभ्यासः कर्त्तव्यः, विघ्नानिमान्सोढुमशक्तजनस्य चात्मज्ञानं तादृशविघ्नप्रसङ्गे समुपस्थिते सति विनश्यति, सुखावस्थायां स्थित्वा यज् ज्ञानमुत्पादितं स्यात्तद् दुःखागतो दूरीभवति, विक्षेपसमुत्पत्त्या तन्निश्चलत्वं न भजते, ततः सामर्थ्यानुसारेण सुखस्येव दुःखदपरीषहसहनाऽभ्यासो विधातव्यः, इच्छानुसारेण ज्ञात्वैव क्षुत्तृषा–शीत–तापप्रभृतयः सोढव्याः, न्यूनवस्त्रै वृत्तिः कर्तव्या, पुनारूपवतीः स्त्रीर्निरीक्ष्य मनो न चालयितव्यं, यदि कोऽप्याक्रोशेत् किंवा ताडयेत् गर्हयेत् वा तत्समभावेन क्षमापूर्वकत्वेन वा सोढव्यं, केनाऽपि प्रशंसा सत्कारस्तिरस्कारो वा विधीयेत तदा स्वल्पमप्यभिमानमाक्रोशोवा न विधातव्यः, यदि व्याधिरागच्छेत्तर्हि शान्त्या सोढव्या, यदि वा निश्चितोपयोगि वस्तु न लभ्येत तर्हि तद्विनैव विशेषतो वृत्तिर्विधातव्या, वसन–शयनक्षितिर्यदि गर्त्तवती भवेत् किंवा वहुवायुमती च न स्यात् तथापि तया स्ववृत्तिर्विधातव्या, तथैव सुमतेर्गर्वो वा ज्ञानाऽभावेन खेदो न निर्मातव्यः परं तदर्थं पुरुषार्थो विधातव्यः, पुनस्तादृशी तादृश्यन्याऽपीष्टाऽनिष्टसंयोगवती स्थितिरागच्छेत् तदा समभावः स्वीकर्त्तव्यः पुनस्तदनन्तरमात्मप्रबोधं सुरक्षितु यतितव्यम् ।

" आग्रहत्यागो विधातव्यः "

कर्मनिर्जरां निर्मातुमिच्छुभिर्जीवैः सुखदुःखयोः किंवाऽन्यवृत्तान्तेष्वपि न कर्त्तव्य आग्रहः, भवति च तत आर्त्तध्यानं, ततश्च जीवाः कर्माणि न दूरीकुर्वन्ति प्रत्युत प्रचुरकर्मसञ्चयं निर्मान्ति, पुनरिदमावश्यकमिदमनावश्यकं, शोभनमिदं

स्यात्तर्हि नेदंस्यात्तर्हि शोभनमेतादृशाग्रहोवैतादृश्यपेक्षा न विधातव्याऽऽत्मार्थिजीवैः, परं पूर्वबद्धेभ्यः स्वशुभाऽशुभकर्मभ्यः सुखं किंवा दुःखं यदा यदुदयमागच्छेत् तत्समभावेन सोढव्यम्, अमुकवस्तुन आग्रहः किंवा विनाऽमुकेन नैव सरेत् तादृशाऽभिप्राया आर्त्तध्यानरूपाऽशुभध्यानमुत्पादयन्ति, तेनचार्त्तध्यानेन जीवा अतीव नवीनान्यशुभकर्माणि बध्नन्ति, ततो यदा यानि यानिं वस्तुनि प्राप्यन्ते तदा ततो निर्वाहः कर्त्तव्यः।

## " आत्मध्यानेन शुद्धिर्भवेत् "

विपरीतदृष्टिमन्तो भवन्ति प्रभूतजीवा अन्योपायेभ्यः शुद्धेरभीप्सवः, पुनस्तदर्थं प्रयत्नमपि निर्मान्ति, तथापि निश्चयोऽयं ज्ञानिनामस्ति यथाऽऽत्मज्ञानेनैवाऽऽत्मशुद्धिर्भवति, विनाऽऽत्मानं ये च जडपुद्गला मायारूपाः किंवाऽजीवाः सन्ति तेषां पदार्थानां तु, आत्मनःसर्वत आवरणमेवाऽस्ति, पुनरिमान्यावरणान्येव " अशुद्धयः " भवन्ति तैश्चपदार्थैरात्मशुद्धिर्भवितुं नैवशक्या भवेत् किन्तु तेषां त्यागेनैव शुद्धिर्भवेदथवाऽऽवरणविरोधितत्त्वत आवरणं याति, यथा च तापेन शीतनिवारणं भवति तस्येव, जडमायाया अस्या विरोधी चैतन्यभावोऽस्ति पुनस्तस्य चैतन्यस्य गुणः ज्ञानं, यद्यज्ञानतो कर्माणि समागच्छन्ति तर्हि तद्विरोधिभावरूपज्ञानदृष्ट्या कर्मागमनरोधः कर्तुं शक्यः स्यात्, किंच पूर्वबद्धकर्माणि यान्ति, तेनाऽऽत्मज्ञानत आत्मशुद्धिर्भवेत् परमन्यस्मात्कस्मादपि पदार्थत आत्मशुद्धिर्नभवति, परद्रव्येभ्यश्चात्मा विभिन्नोऽस्ति, ततः कीदृशैरपि शोभनैः परद्रव्यैः सर्वथा प्रयत्नं कुर्वन्तु तथाप्यात्मा न भविष्यति " शुद्धः " पुनस्तथैव तानि परद्रव्याणि नात्मनः स्पर्शं विधातुं प्रभविष्यन्ति, यानि च परद्रव्याणि शुभाऽशुभकर्माणि सन्ति तानि चात्मनः पृथक् कर्तुं प्रयोजनं स्यात्तर्हिंविधातव्याऽऽत्मस्वरूपभावना, पुनरहमात्मस्वरूपमित्यहर्निशं स्मर्तव्यम्, ये चात्मस्वरूपं न परामृशन्ति ते परद्रव्याण्यपि विहातुं न शक्नुवन्ति। कर्त्तव्यः परामर्श आत्मनः,

द्रव्यगुणपर्यायाणामहमात्माऽस्मि तादृशी प्रबलभावना चैधितव्या, पुनरात्मनोऽनन्तशक्तेस्तथा च तस्य ज्ञातृत्व-द्रष्टृत्वस्य परामर्शो विधातव्यः, पुनस्तथैव च प्रतिप्रदेशमहमनन्तबलवान् ज्ञानवानात्माऽस्म्येतादृशी, जागृतिः 'स परद्रव्याणामात्मतः पृथक्विधानोपायोऽस्ति ।

## " परद्रव्याण्यपि जानन्तु "

आत्मतः परद्रव्याणि पृथक् कर्तुमिच्छुभिर्जीवैः परद्रव्यमपि ज्ञातव्यं स्यात्, यश्च परद्रव्यं न जानीते स नात्मद्रव्यं ज्ञातुं शक्नोति, पुनरशोभनपदार्थविद्यमानतायामेव शोभनपदार्थानां मूल्यं स्यात्, दुःखस्य विद्यमानत्वे सुखस्य प्राधान्यं श्रेष्ठत्वं वा ज्ञायते, दुःखदायकपदार्थानां विद्यमानत्वे जीवाः सुखविधायकपदार्थानिच्छन्ति, परद्रव्याणामहितकारित्वज्ञानाऽनन्तरमेव हितकारिणमात्मानंप्रति प्रवृत्तिः कर्तुं शक्या, यावदिदं परद्रव्यस्वरूपं ज्ञातुं समर्थो न स्यात् तावदात्मद्रव्यं प्रति प्रवर्तितुं समर्थो न स्यात् ।

## " परामृशन्तु जगत्स्वभावम् "

परद्रव्यतो विरक्तीभवनाय वा स्वतत्त्वं प्रति स्नेहं स्थापयितुं किंवा, सर्वकर्मभ्यो पृथग् भवितुमस्य जगत्स्वभावस्य परामर्शो विधातव्यः,पदार्थाऽनित्यत्व-जीवाशरणत्व-संसारवैविध्यस्य,एकाकिजीवस्यैव कृतकर्मभोगत्वस्य च देहादात्मभिन्नत्व-स्य शरीराऽशुचित्व-कर्मागमनमार्ग-कर्मरोधोपायानां च आत्मतः पुनः कर्मपृथकूत्वपरिणामप्रभृतीनां विचारः कर्त्तव्यः, जन्म-मरणाधि-व्याध्युपाधीनां विषमतायाः पुनः पञ्चेन्द्रियविषयविरसत्वस्य च परामर्शोनिर्मातव्यश्च तदनन्तरं संसारसुखस्यास्य पुनरात्मशान्तेश्च,सादृश्यं घटयितव्यं, तेन च संसारासारत्वं ज्ञायेतैव, आभ्यन्तराध्यवसायवन्तो जीवाः " हिंसाऽसत्य-चौर्य-व्य-

॥३४॥

भिचारात्मकपापैर्बध्यन्ते एव, तान्येव पापानि यदि चान्तराऽध्यवसायतो बहिर्निष्कास्यन्ते तर्हि जीवान् बद्धुं समर्थानि न भवन्ति ।

## " यन्निकटे स्यात् तद्दीयते "

योजनो ज्ञानाऽऽराधनां विधत्ते तस्मै ज्ञानं कर्तृ, ज्ञानं ददाति, यश्चाऽज्ञानाऽऽराधनां करोति तस्मै, अज्ञानं ददात्यज्ञानम्, सत्यस्वरूपोऽयं वृतान्तो यत् स्वसन्निधौ यस्य वस्तुनो विद्यमानत्वं भवेत् तदेव दीयते "नास्ति भेदो ज्ञानज्ञानिनोः" यतश्च ज्ञानाववोधेनैव ज्ञानी कथ्यते, व्यवहारदृष्टयातु ज्ञानस्य गुणत्वं ज्ञानिनश्च गुणित्वमित्यनयो र्भेदोऽभिधीयते, परं तात्त्विकदृष्टया यदि परामृश्यते तर्हि ज्ञानमेव ज्ञानी, ज्ञान्येव च ज्ञानमस्ति, यतो गुणगुणिनोरभेदसंवन्धस्ततश्च ज्ञानज्ञानिनोः पृथक्त्वं न स्यात्, तेन ज्ञानस्याऽववोधे सति ज्ञानवदात्मनोऽवश्यमेव ज्ञानत्वं भवेत्, पुनरात्मनि ज्ञानमस्ति तदेतन्निखिलजनाः प्रत्यक्षतयाऽनुभवन्ति, ये च ज्ञानाऽनुभवरहितास्तेषां संवन्धि, पदार्थज्ञानं न भवेत् ।

अमूर्त्तात्मनो गुणत्वेन ज्ञानस्यामूर्त्तत्वम्, पुनरिन्द्रियप्रत्यक्षतया नभवेत्तेषां तस्याऽनुभवस्तथापि "जानाम्यहम्" इत्यादिस्वाऽनुभवतो यथार्थतया तदनुभूयते, यस्य ज्ञानानुभवः स्यात्तेनैव ज्ञानेनाऽन्यपदार्था ज्ञायन्ते ।

## " न भवति ज्ञानं प्रत्यक्षम् "

कियन्तो मतावलम्बिनो न स्वीकुर्वन्ति ज्ञानं प्रत्यक्षतया, किन्तु परोक्षतया मन्यन्ते,तैर्ज्ञातव्यमेतद्यत्स्वेच्छया ज्ञानं परोक्षत्वेन स्वीकुर्वन्तु किन्तु यदि तेन परोक्षज्ञानेन विषयवोधो भवद्भ्यो भवति तदा तेन परोक्षज्ञानेन तस्य ज्ञानस्वरूपात्मनोपि प्रतीतिः कथं न भवेत् ? भवेदेव,

येन ज्ञानेन पदार्थो ज्ञायेत तेन ज्ञानेन ज्ञानवान् कथं न ज्ञायेत ? येन दीपेन घटपटप्रभृतिपदार्थाः प्रकाशिता भवन्ति

तेन दीपेन स एव दीपो याथार्थ्येन कथं न ज्ञायेत ? ज्ञायते एवेत्यर्थः, यो जनो ज्ञेयं जानाति स ज्ञायकमपि कथं न जानीयात् ? यतो न सन्ति कानिचिदन्यबन्धनानि किंवा बन्धकः कोऽपि, प्रकाशकरणाऽर्हपदार्थान् पश्यति परं प्रकाशकारकं न पश्यति तदेतत् विषादकारकमाश्चर्यकारकं वा कथनं कथंन। अस्ति परमात्मस्वरूपं ज्ञेयत्वेन, तच्चात्मस्वरूपं लक्ष्यस्वरूपेण ज्ञात्वा, ततो लक्ष्यतः पश्चान्निवृत्य, लक्ष्यरूपेण च शुद्धात्मानं संस्थाप्य, तस्यध्यानं कर्त्तव्यं ततः कर्मनाशो भवेत्, प्रथमं परमात्मनो ज्ञेयरूपेण ज्ञानं कृत्वा, तादृश एव स्वस्य शुद्धात्माऽस्ति तत्प्रकारेण निश्चित्य तदनन्तरं स्वशुद्धात्मानं ज्ञेयरूपेण संस्थाप्य, तदनुभवो विधातव्यः, पुनरनेनाऽनुभवेन कर्मणां विनाशो भवति तदनन्तरमात्मैव, परमात्मस्वरूपेण भूत्वा तिष्ठति, साध्यसिद्धेरनन्तरमालम्बनं विहातव्यं स्यात्, महद्भाजनतो भोजनं दर्व्या बहिर्निष्कास्यते तदनन्तर च, पर्यन्ते सा दर्वी यथा मुच्यते, तद्वदिन्द्रियमानसयोर्देवगुर्वादेश्च सहायतयाऽवगम्यात्मानं, तदनन्तरं ज्ञानशस्त्राणि किंवाऽवलंबनानि विहातव्यानि भवन्ति, भोजनकार्यानन्तरं यथा दर्व्यवलंबनं निरर्थकं स्यात्तस्येवेन्द्रियमानस-परमात्मादिसहायकानां सहायतया ज्ञात्वाऽनुभूय च पश्चात्तस्य सहायकाना मवलंबनानां वा स्वीकरणस्य नोपयोगित्व भवेत्, यथा भोजनेच्छूनामिष्टभोजनलाभेन प्रमोदो भवेत्तद्वदात्मदृष्टीनामात्मतत्त्वलाभेन प्रमोदो भवति। भवेदविनाशिप्रेम ज्ञानिनां, यथा दुःखभीता जना दुःखकारणानि स्वेच्छया त्यजन्ति, तद्वदात्मतत्त्वे सुखबुद्धयो जना, विषयान् दुःखदायकत्वेनाऽवगम्य पश्चात्तान् स्वेच्छया त्यजन्ति। यथा च सुवर्णशुद्धिकारको लभते सुवर्णं, लोहशुद्धिकारकश्च लोहमधिगच्छति, तस्येव ज्ञानशोधको ज्ञानमज्ञानशोधकश्चाज्ञानं प्राप्नोति, यथा च दर्पणे मनुष्यादि संसर्गतस्तादृशं प्रतिबिम्बं दृश्यते, तस्येव निर्मलचैतन्ये, कर्मसंसर्गतः प्रतिबिम्बरूपेण मोहो दृश्यते, विशुद्धदर्पणे यथा वास्तविकं प्रतिबिम्बं न भवेत्तथापि तस्य दर्पणसान्निधौ किञ्चिन्मनुष्य-पशु-पक्षिप्रभृतिवस्तु सन्मुखमापतति तदा, तस्मिन् तादृशं प्रति-

विम्बं पतति, तस्यैव तात्त्विकदृष्ट्याचात्मा निर्मलोऽस्ति, परं संयोगसंबन्धेन कर्मोपाधितो दृश्यते आत्मनि मोहः, किन्तु वास्त-
विकतयात्वात्मनि तादृशं किञ्चिन, किञ्च मोहो न स्यादात्मनो वास्तविकं स्वरूपं, तत्तु दर्पणपतितप्रतिविम्बस्यैवागन्तुकमस्ति
वहिष्टादागतंवा, यद्वस्तु समागच्छति तद्वस्तु गन्तुं शक्नोति।

" यादृशी वासना तादृशं फलं लभ्यते, यद्ययं जीवो धर्मेण वासितः क्रियेत तर्हि स जीवो धर्मे प्रवर्तेत, न च पापे प्रवृत्तिं विदध्यात्, परं यदि स पापेन वासितः क्रियेत तर्हि निरन्तरपापप्रवृत्तिमेव करिष्यति तथैव ज्ञानभावितजीवो ज्ञान प्रवृत्तिं निर्मास्यति किन्त्वज्ञानप्रवृत्तिं न विधास्यति, ततो यद्येवमेव स्यात्तर्हि पश्चादात्मविशुद्धिं विधातुमिच्छुभिर्जीवैः नि-
जस्य समस्ताः प्रवृत्तयो ज्ञानमया एव कर्त्तव्याः, शुद्धीकृतं सुवर्णं यथा न भवति पुनर्मलिनं तद्वन्निर्मलत्वमाप्तज्ञानिजीवः
पश्चादज्ञानतां न-स्वीकरोति

## " विद्वद्भ्यो हितशिक्षा "

हे विद्वांसो यूयमेतादृशमभ्यासं कुरुत, पुनरेतादृशं ध्यायत, पठतैतादृशं, तथा तादृशेन प्रकारेण मनसः स्थैर्यं कुरुत
पुनरेतादृशीमाराधनां विधत्त, पृच्छताऽन्येभ्य एतादृशमेतादृशं च शृणुताऽन्येभ्य एतादृशं च जानीत, पुनरेतादृशमन्येभ्यः कथ
यत, प्रार्थनां चैतादृशीं सृजत, पश्यतैतादृशमेतादृशं लभध्वमेतादृशं च वशीकरणं प्रणयत, स्पृशत पुनरेवं किञ्चिद्, येन युष्मा-
भिर्निरन्तरं ध्रुवमात्मस्थैर्यं लभ्येत, परद्रव्यप्रसङ्गनिवारको योगी चेन्द्रियौघं प्रभूतचापल्ययुक्तं ज्ञात्वा, आभ्यन्तरदृष्ट्या च
निर्मलज्ञान–दर्शन–चारित्रस्वभावत आत्मनो ध्यानं निर्माय, कर्मनिजरां च कृत्वा, नित्यज्योतिःस्वरूपनिरुपमपदं प्राप्नोति।

इतिश्रीतपगच्छीयगच्छाधिपतिश्रीमन्मुक्तिविजयगणिनां शिष्यश्रीमदाचार्यश्रीविजयकमलसूरीश्वराणां मुख्यपट्टधरशिष्य-

श्रीमदाचार्यश्रीविजयकेशरसूरीश्वरेण विरचिते श्रीमहावीरतत्त्वप्रकाशाभिधानके ग्रन्थे निर्जराधिकारः समाप्तिमगात् ।

## " अथ मोक्षाऽधिकारः "

वन्धकारणानां निवारणे सति, सर्वथाऽऽगन्तुककर्मणां निवारणं भवति, निर्जरया च पूर्वबद्धकर्माणि सदैवाऽऽ-
त्मतो विभिन्नानि भवन्ति, पुनरभिधीयते सा स्थितिः " मोक्षत्वेन " मोक्षेऽस्मिन्नहर्निशं ज्ञानप्रकाशः प्रकाशित एव भवेद्, तथैव
जन्ममरणानि नैरन्तर्येण विनश्यन्ति, मोक्षलाभादस्मात्प्रागस्मिन्नन्तिममनुष्यदेहे निवसति सति " यथाऽन्धकारस्याऽपगमने
नाकाशे प्रकाशस्वरूपो देदीप्यमानभानुरुदयते " तद्वद् " ज्ञानावरण–दर्शनावरण–मोहनीयाऽन्तरायाणां " चतुर्णां घातिकर्म-
णां क्षये सति, केवलज्ञानमुदयते प्रादुर्भवति वा, यथाचाऽन्धकारः सूर्यप्रकाशस्य प्रतिबन्धकस्तस्यैव ज्ञानावरणादीनि चत्वारि
कर्माणि केवलज्ञानाद्यात्मगुणानां प्रतिबन्धकानि सन्ति, यथा च तमोऽपगमेन सूर्यः प्रकाशितोभवति तस्यैव, ज्ञानावरणादी
नामत्यये केवलज्ञानादयश्चत्वारो गुणाः प्रादुर्भवन्ति, यथा च मलदूषितदर्पणे न किञ्चित्प्रतिबिंबं दृश्यते तस्यैव, ज्ञानावरणादि
कर्मभ्यो मलिनात्मनि, केवलज्ञानादिगुणा नाऽऽविर्भवन्ति, ज्ञानावरण–दर्शनावरण–मोहनीयाऽन्तरायाणामेषां चतुर्णां कर्मणां
सहैव विनाशो भवति तेन कृत्वा च योगिभ्यः " अनन्तज्ञानदर्शनाऽऽनन्दवीर्यरूपाश्चत्वारो गुणाः " सहाऽऽविर्भवन्ति, यथा
च विनावज्रं गिरिं भेत्तुं नैव शक्यते केनापि, तथैव शुद्धात्मध्यानं विना मोहादिविनाशं कर्तुं न कोऽपि समर्थो भवेत्, यद्यपि
विपुल–दृढ गिरीणां भेदनमेतदसौकर्यं, तथापि तदुपरि वज्रप्रहारैः स्वल्पेनैव समयेन तेषां खण्डशः भेदनं कर्तुं शक्यं भवेत्तस्यैव,
ज्ञानावरणादिचतुर्णां कर्मगिरीणां भेदनमेतत्क्लिष्टकार्यमस्ति तथापि, विशुद्धात्मध्यानवज्रेण सौकर्येण तद्भेदनं क्रियते, ध्यान-
स्थैर्याऽग्निना कर्मस्थितरसशोषणतः कर्माणि रसरहितानि भवन्ति, ततश्च स्वल्पेनैव समयेनात्मप्रदेशतः पृथग् भवन्ति ततश्च कर्माऽ-

पगमाय 'मोक्षाऽर्थिजीवेभ्य आत्मध्यानं "योग्यमार्गः" 'स्यात् यथाच व्याधिग्रुक्तजनस्यौषधेनाऽसाध्यव्याधिविनाशतस्तस्मै यः प्रमोदो जायते, तादृशः किन्तु तात्त्विकानन्दो, महत्क्लेशकारिणो दुःखनिवार्यस्य कर्मणोऽसाध्यसदृशव्याधेः शुद्धध्यानरूपौषधेन दूरीकरणाद् योगिना लभ्यते । अयं केवलज्ञानी केवलज्ञाननेत्रैरिन्द्रियातीतपदार्थान् साक्षान्निरीक्ष्य, योग्यताऽनुसारेण जीवेभ्यो धर्मोपदेशं दातुं प्रवर्तते, ते प्रचुरपुण्यवन्तः सन्ति ततो देवा अष्ट महाप्रातिहार्याणि तत्सेवार्थं विदधति, भवेच्च तेषां देशनाऽमोघा तेन च तदुपदेशप्रभावो जीवोपरि भवेदेव, यदा च तीर्थङ्करा धर्मबोधं ददति तदा देवास्तेषां समवसरणे देशनाऽर्पणस्थाने विरचयन्ति वृक्षमशोकमेकं, तच्छायायामुपविष्टेभ्यो जीवेभ्यस्तावत्समयपर्यन्तं न तिष्ठति कस्याऽपि प्रकारस्य शोकः किंवोद्वेगः, वृक्षोऽयमशोकः संपूर्णसमवसरणस्थानोपरि विस्तृतो दृश्यते, देवा जानुप्रमाणां सुन्दरसुगन्धिपुष्पवृष्टिं निर्मान्ति समवसरणे २ आनन्दकारकेण प्रभुदेशनाध्वनिना सह देवाः स्वरं पूरयन्ति ३ द्वयोः पार्श्वयोर्देवाश्चामराणि व्यञ्जयन्ति ४ देशनादानसमये प्रभोरासनार्थं सिंहासनं स्थापयन्ति ५ भगवतः पश्चात्भागे भामण्डलं स्थापयन्ति, देवा दिव्यवाद्यं वादयन्ति, ७ भगवच्छीर्षे छत्रं धारयन्ति ८ पुण्यप्राबल्येनेमान्यष्ट प्रातिहार्याणि भवन्ति, तीर्थङ्करदेशनात आत्मप्रबोधस्य यथावृद्धिः स्यात्तादृशोत्तमलाभो भवेत्, किञ्च प्रभुदेशनां मनुष्य-देव-पशवोऽपि स्वस्वभाषायां चावगच्छन्ति । भवति च यथा पावक स्वभाव उष्णो, वायुस्वभावश्चपलस्तथा चन्द्रस्वभावः शीतस्तद्वदात्मस्वभावो "ज्ञानमस्ति" जानाति पुनरात्मा ज्ञानस्वभावे न विभ्रम्, अस्ति चात्मनः स्वरूपं चैतन्यं, पुनस्तच्चैतन्यं ज्ञानमयं, यावच्च ज्ञानसामर्थ्यरोधकस्य सामर्थ्यं प्रबलं भवेत्तावज् ज्ञानं स्वस्य विश्वद्रष्टृत्वकार्ये प्रवृत्तिं विधातुं न प्रभवति, विद्येत चात्मन्यनन्तसामर्थ्यमनन्तंचज्ञानं तथापि यावत्तत्सामर्थ्य निवारकज्ञानावरणादिकर्मणो विद्यमानत्वं भवेत्तावज् ज्ञानं स्वस्य विश्वज्ञातृत्वसामर्थ्यं प्रादुष्कर्तुं न शक्नोति, ज्ञानावरणाऽ-

पगमत्वे सत्यात्मा, स्वस्य लोकालोकप्रकाशकशक्तिं प्रादुर्भाव्य तदनुभवं गृह्णाति। यथा च पावकस्वभावरोधकश्चन्द्रकान्तमणिः किंवाऽन्यन्मंत्रादिवस्तु, प्रतिबन्धकतया न स्याच्चर्हि पावको दाह्यपदार्थं दहत्येव तस्येव, ज्ञानिनः स्वप्रतिबन्धकज्ञानावरणं न स्याच्चर्हि तन्निजज्ञायकत्वसामर्थ्यतो ज्ञेयपदार्थस्य विना ज्ञानेन स्थातुं न शक्नोत्येव।

## “आत्मज्ञानस्य देशकालादीनां प्रतिबन्धकत्वं न भवति”

यथा भानोः प्रकाशे देश-काल-स्वभावरूपाः प्रतिबन्धका न भवन्ति तद्वदात्मनेऽपि दूरप्रदेशादेः प्रतिबन्धकत्वं न भवति तदेतत् प्राकट्येनाऽनुभवसिद्धमस्ति, मेरुगिरिरेप देशक्षेत्राऽपेक्षया दूरप्रदेशस्तथैवच रामलक्ष्मणादयः प्रभूतसमयात् प्राकूजातास्ते कालाऽपेक्षया दूराः, परमाणोरतिसूक्ष्मत्वेन स्वभावापेक्षया स दूरत्वेन मन्यते, देशाऽपेक्षयेत्थंभानोर्दूरत्वे सत्यपि, तस्मै पदार्थप्रकाशनकार्यं विधातुं नाऽशक्यं, यतस्तस्य भानोः स्वभावः सदा प्रकाशनस्यैवाऽस्ति, दृष्टान्तेनानेनैव देशकालाद्यपेक्षया पदार्थानां दूरत्वेऽपि ज्ञानं सर्वपदार्थान् स्पष्टतया जानाति,ततो मेरुगिरि-राम-लक्ष्मण-परमाण्वादिपदार्थानां विप्रकृष्टत्वे सत्यपि, तेषां बोधे ज्ञानस्य सामर्थ्यं भवेत्, यथा सूर्यो यत्र स्थाने स्थितोऽस्ति ततः स्थानतो दूरस्थितपदार्थप्रकाशनकार्ये सूर्याय यथासरलं शक्यं चास्ति तथा देशकालादितो दूरस्थितपदार्थानामपि प्रकाशनकार्यं ज्ञानकार्यंवाऽऽत्मने सरलं शक्यं च, देशकालादीनां बोधे तेषां प्रतिबन्धकत्वं न, तदेतत्स्वानुभवप्रत्यक्षं, परमेतावद्विशेषोऽस्ति यदिदं कथनं केवलज्ञानापेक्षया बोद्धव्यम्, पूर्णमिदं ज्ञानं यत् केवल ज्ञानत्वेनाऽभिधीयते तस्य, न केऽपि देशकालादिपदार्थाः प्रतिबन्धकाः परं यानि देशप्रत्यक्षमतिज्ञानादीनि सन्ति तेषुतु देशकालादितो विप्रकृष्टपदार्थानां ज्ञानकरणे ज्ञानावरणस्य प्रतिबन्धकत्वमस्ति, तत एतस्मादयं निश्चयो जातोयद्यथा सूर्यस्य प्रकाशनाय, प्रतिबन्धकरूपेण चाऽभ्रसमूहोऽस्ति परं, देशकालादिनां प्रतिबन्धकत्वं-

नास्ति, तस्येव जगतोनिखिलपदार्थानात्मा ज्ञातुं समर्थो भवेत्, नास्ति च तस्मिन् देशकालादीनां प्रतिवन्धकत्वं, किंतु ज्ञानावरणकर्मण एव प्रतिवन्धकत्वं स्यात् ।

## " ज्ञानं विशेषपदाथानपि ज्ञातुं प्रभवति "

यथा सामान्यपदार्थस्वभावो ज्ञानविषयभूतस्तस्येव, विशेषपदार्थस्वभावोऽपि ज्ञानविषयभूतः, एतावता विशेष पदार्थानामपि ज्ञानं भवेत् विना केवलज्ञानेन पदार्थानां पूर्णस्वभावस्य ज्ञानं न स्याद्, आत्मनो ज्ञानस्वभावत्वेन तस्य सर्वज्ञत्वं सर्वदर्शित्वं च सिद्ध्यति, यदि चात्मानं सर्वज्ञत्वेन सर्वदर्शित्वेन च नमन्यामहे तर्हि तस्मिन् न संभवेत् " ज्ञानस्वभावत्वम् "। पदार्थो द्विधा "प्रथमः सामान्यो द्वितीयस्तु विशेषः" घटकथनेन सामान्यतयाऽखिलघटानां ज्ञानं भवेत् परं पीतघटकथनेन तस्यैकस्य पीतघटस्यैव ज्ञानं भवेत्,पुनरस्ति च "घट इति" सामान्यज्ञानं "पीतघट इति" विशेषज्ञानं पश्यन्तु यत् सामान्यतयात्वेकघटदर्शनेन निखिलघटा एतादृशा भवेयुरेवं समस्तघटानां ज्ञानं भवति,परमयं घटः पीतः शरदृतौ निर्मापितो जलशैत्यविधायकत्वगुणवाने तत्प्रत्तान्तंतु केनाऽपि विशेषज्ञानेनैव ज्ञातुं शक्यत। ज्ञानस्वभावत्वेनात्मा ज्ञास्यति सर्वपदार्थान् तथैवच दर्शनस्वभावत्वेनाऽखिलपदार्थान् द्रक्ष्यति यथाऽखिलपदार्थान् जानीयात्तथा पश्येत्स सर्वज्ञस्तथा सर्वदर्शी प्रोच्यते, यदिच मेर्वादीनां पदार्थानां सामान्यविशेषस्वभावस्य ज्ञानं कर्तुं न शक्नुयात् तदाऽऽत्मा ज्ञानस्वभाव एव नाभिधीयेत, ततो वाच्येयं सिद्ध्यति यथाऽऽत्मा ज्ञानस्वभावत्वेन सर्वज्ञः सर्वदर्शी च भवेत्, तथा निखिलं जानाति पश्यति च, सर्वज्ञत्वेन सर्वदर्शित्वेन चात्मने केवलज्ञानंस्याच्चे न च केवलज्ञानेनात्मा सामान्यपदार्थानामिव भूतकाले भूतान् तथैव च वर्तमानकाले कियतोऽपि दूरस्थितान् किंवा सूक्ष्मान्पुनरायतौ तत्पदार्थपर्यायेषु यो विशेषो भविष्यति तत्सर्वविशेषानपि जानाति, तेन देशकालभावतो ये ये पदार्था समीपे किंवा

तत्पुनः क्षयोपशमजन्यज्ञानमेतन्मोक्षे न स्यात्परमात्मनः शुद्धस्वभावरूपज्ञानस्य तु विद्यमानत्वं भवेदेव तस्याऽभावेत्वात्मनोऽप्य भाव एव भवेत्

## " विना प्रयत्नेन मुक्तो न भवेदात्मा "

यथा कारागारे पतितोऽपराधीजनः पुरुषार्थरूपोपायविधानं विना न मुक्तो भवेत्तस्यैव विविधजडचैतन्ययोर्बन्ध मोक्षयोश्च ज्ञानत्वे सत्यपि तन्निवारणाय शास्त्रोक्तस्यैव वर्तनरूपोपायविधानं विना कर्मबद्धात्मा न मुच्यते, परं योजन आत्मकर्मणोर्भिन्न-भिन्नलक्षणैस्तयोर्द्वयोर्भेदानवगम्य, शुद्धाऽऽत्मतत्त्वे स्थिरताविधानरूपं सदुपायं विधत्ते सजनः कर्मतो मुक्तो भवेत्, पुनरस्मादियं वार्त्ता स्पष्टतया दर्शिता यन्मुक्तभवनोपाय एकंज्ञानमेवन, किंतु तेन ज्ञानेन सहात्मनः स्वस्वरूपेण परिणमनरूपक्रिया, या बन्धनतो मुक्तभवनोत्तमोत्तमोपायरूपाऽस्ति, तस्या अपि तेन ज्ञानेन सह विधानं योग्यं स्यात् । यथा सुवर्णस्यैकजातित्वे सत्यपि, व्यवहारिजनास्तस्य सुवर्णस्य शुद्धाऽशुद्धाऽपेक्षया द्वैविध्यं कथयन्ति, यथेदं सुवर्णं शुद्धमिदंचाऽशुद्धं तस्यैवात्मैकोऽपि शुद्धोऽयमशुद्धोऽयमित्येवं शुद्धाऽशुद्धाऽपेक्षया तस्याऽऽत्मनो द्वैविध्यं जनाः कथयन्ति, नास्ति शुद्धनयाऽपेक्ष याऽऽत्मनि भेदस्तथापि व्यवहारनयापेक्षया कर्मसंबन्धयुक्तात्मा " अशुद्धस्तथा संसारी " प्रोच्यते, कर्मवियुक्तात्मा "शुद्धस्तथा मुक्तोऽभिधीयते, संसारयुक्ताऽऽत्मा कर्मसहितो मुक्तात्मा च कर्मवियुक्तः स्यात्, पुनः संसारयुक्तात्माऽशुद्धो मुक्तात्मा च शुद्धो वर्तते, आत्मा तदन्यं च यत्कर्म तयोर्यः संयोगः स "संसारः" कथ्यते किंवा भवः प्रोच्यते, भवस्याऽस्याऽभावः "कर्मवियोगो" ऽभिधीयते, भवस्याऽस्य वियोगेन किंवा कर्मवियोगेन पुनर्जन्म न भवति ।

## " मुक्तात्मनः स्थितिः "

मुक्तत्वस्थित्यामात्मनः परपदार्थसंयोगो न भवेत्, स आत्मा निजस्वभावे परिणम्य तिष्ठति तेन च कृत्वा तस्य
कस्याऽपि प्रकारस्यौत्सुक्यं न स्यात् किंतु मेरुरिव स्वभावे स्थिरो भवेत्,विभावे च परिणमनत्वाऽभावेन तत्र कस्यापि प्रकारस्य
क्लेशसंभवो न, तथैव च स्वरूपप्राप्त्या स कृतार्थो जातस्ततस्तेन किमपि कर्त्तव्यं नास्ति, पुनः कर्मरूपमलाऽभावेन तज्जन्य
बाधाऽपि तेभ्यो न संभवेत्, ते च सिद्धाऽऽत्मानो निरन्तरमात्मन आनन्दमयस्थित्यां निवसन्ति ।

## " ध्यानस्य फलम् "

पूर्णपरमात्मस्वरूपस्य किंवा परब्रह्मणो यो लाभः स ध्यानस्य मुख्यफलं, फलमिदमैकान्तिकं,नास्ति तस्मिन्नपवादा-
ऽवसरः, पुनस्तदनुभवगम्यमनुत्तरफलं च, तदग्रे प्राप्तव्यमन्यदुत्तमफलं किञ्चिदपि न संभवेत्, ततश्च मतिमद्भिर्वादप्रतिवादा-
दिवासनां विहाय, परब्रह्मरूपशुद्धात्मस्वरूपलाभाय चात्र प्रबलपुरुषार्थो विधातव्यः, वादविवादविधानेन वस्तुतत्त्वलाभो
न भवेत् परं, कार्यकरणस्य यथार्थसमयो व्यर्थ एव याति, ततोऽस्मिन्नेव भवे चात्मनः शुद्धस्वरूपं प्रादुर्भावयितुं यावान्संभवेत्तावान्
प्रयत्नोऽहर्निशं विधातव्यः स्यात् ।

## " महात्मनामुपदेशः "

ध्यानमार्गस्य ज्ञायका ध्यानेन कर्मक्षयस्य विधायका योगिनो भावियोगिनां हितार्थमन्धकारे दीपकइवैवमुपादि-
शन्ति यत्प्रमादविधायकजनो मार्गं न लभते तथैव सत्यनिर्णयोपर्यागमनेच्छारहिता वादप्रतिवादविधायकास्तत्त्वज्ञानस्य
पारमधिगन्तुं न पारयन्ति, यथागमनप्रमादस्याऽविधायकाजनाः स्वस्याऽखण्डप्रयाणेन निश्चितस्थाने यान्ति तस्यैवोपयोग

स्याखण्डनिश्चलजागृत्या शुद्धचैतन्यध्यायकाः, कर्मक्षयं निर्माय भवसमुद्रमिमम्रुल्लंध्य स्वयात्रां च पारयित्वा, परमशान्तिं च लभन्ते, ध्यानमेव कर्मक्षयकरणस्य किंवा मोक्षप्राप्तेरुपाय एवं ज्ञानिभिर्ज्ञातमनुभूतं च, यथा च पठितमंत्रो घोरविषं विनाशयति तद्वदात्मापि ध्यानेनानेकभवोपार्जितकर्माणि विनाशयति, चिन्तामणिरत्नं चिन्तितं यच्छति कल्पितं च कल्पवृक्षो ददाति किन्तु शुद्धात्मध्यानं तु ददात्यचिन्त्यामकल्प्यां चात्मनोऽनन्त शक्तिं, शुद्धात्मध्यानेन जन्म-मरण-वृद्धावस्थारूपव्याधयः सौकर्येण विनाश्यन्ते, तस्य शुद्धात्मनः कामवासनापराजयनिर्माणे किंवा विनाशकरणे स्वल्पोऽपिप्रयासो न विधातव्यः स्यात् अर्थात्कामोऽपि सौकर्येण जीयते ततो हे महानुभावा वादविवादं विहाय पुनरध्यात्मचिन्तनं कुर्वन्तु तथैव स्थिरीकुर्वन्त्वात्मोपयोगं, वारंवारं विभावदशायां य उपयोगो भवति चालितस्तं स्वस्वभावे रमयन्तु, विनाऽज्ञानाऽन्धकारदूरीकरणेन ज्ञानमनन्तज्ञेयस्य विषयं विधातुं न पारयति, तथैव दृश्य-ज्ञेयपदार्थान् प्रकाशयितुं न शक्नोति पुनरुपायत उपेयस्य प्राप्तिर्भवति, ततो हे मतिमन्तो यूयं सदुपाये महदादरं स्थापयत, न कोऽप्यात्मचिन्तनसदृशोऽन्यः शोभनोपायः, परमयमुपायो मोहपाशपतित जीवेभ्यो दुष्प्राप्योऽस्ति।

## " आत्मसिद्धेर्बाह्यसाधनानि "

उत्साह-निश्चय-धैर्य-संतोष-तत्त्वदर्शनैकान्तवासस्वरूपाण्येतानि बाह्यसाधनानि भवन्त्युपयोगित्वेनात्मस्वरूपप्रादुष्करणे, शुद्धात्मध्यानमेतदाभ्यन्तरसाधनं स्यात्, पुनरात्मस्वरूपं प्रादुष्कर्तुमिच्छतः साधकस्यैतावत्पर्यन्तः प्रबलो भवेत् प्रोत्साहो यत् " कार्यं साध्नोमि किंवा देहो नश्यति " अर्थाद्देहो विनश्येत् तथापि निजोत्साहो दुर्बलो न विधीयते, निश्चयोऽपि तस्य तावानेव दृढो भवेद्यत् स्वस्य सर्वभोगेनाऽपि तत्कार्यसिद्ध्यर्थं पुरुषार्थं विधत्ते, यावन्निश्चितकार्यसिद्धिर्न भवेत्तावन्नाऽ-

न्यकार्यं प्रारभते पुनः सुखेन निश्चिन्ततया स्वपित्यपि न, वर्षशतव्यतीतत्वे सत्यपि कार्यसिद्धिविधानार्थं तस्य धैर्यं न न्यूनीभवति, नैकशो निराशालाभेऽपि स कार्यं न जहाति, किंत्वावश्यकीयसाधनसंग्रहं विधाय, पुनः पश्चात्पुरुपार्थं प्रारभते, यत्र यत्र स्वन्यूनत्वं दृश्यते तत्र तत्र तन्न्यूनत्वं पूरयित्वा कार्यसिद्धिनिर्माणं विना न तिष्ठति, फल यदि न दृश्येत तथापि तस्य धैर्यं नाऽल्पीभवति पुनरनेकभवाऽन्तरेऽपि पर्यन्ते स्वबलेन तत्कार्यसिद्धिर्भवेत् , पुनः सन्तोषोऽपि तस्याऽगाधः, किञ्चित्किञ्चिद्-गुणलाभेन चेमे विश्वजना अभिमानवृत्त्या यं संतोषं धारयन्ति पुनरग्रे

वर्धमाना स्खलन्ति नास्त्यं संतोषः परं प्रमादः, यस्य कार्यस्य प्रारंभो विहितस्तत्कार्यान्तं पुरुषार्थं विधत्ते तथाऽपि सन्तोषं धारयति, कथनाऽभिप्रायस्त्वयं यथा सामान्यजनाः कार्यसिद्धौ विलंबत्वेन हताशत्वेन निराशत्वेन भूत्वा च पुनरन्येषां समीपे रोदनं कुर्वन्ति यथा हे भ्रातरः किं कुर्याम ? पञ्चमारोदुःषमकालोऽन्तिमसंहननं चाऽस्ति पुनः सुनिमित्ताऽभावत्वेत्यादिकारणै रेतादृशकाले कुत आत्मज्ञानं प्रादुर्भवेद् , ध्यानं कथं स्यात् रोदक एतादृशः स नस्यात् किन्त्वस्मिन्कालेऽपि निजस्याऽनिवार्य प्रसङ्गेन यत्प्राप्तं तस्मिन् संतोषं धारयेत् पुनस्तत्पूर्त्यै चाऽस्ताघपुरुषार्थं क्रियेत पुनरस्याऽभिधानं संतोष इति किञ्चैतादृशपुरुषार्थं विधानाय परिचितदेशस्य परिचितजनानां च सङ्गो विहातव्यो यतो न वर्द्धते पुरोऽभ्यासः परिचिनजनसंसर्गतः,अभ्यासार्थं ते विघ्नरू-पा भवन्ति,समखरतापजीवजन्तुसंबंध्युपद्रवयुक्तः पुनस्तादृशोऽन्योऽपि ध्यानविघ्नरूपदेशः स्यात्स विहातव्यः, समस्तानामेतेषां साध-नानां सहायतया साधकाय तत्त्वदर्शनं भवेत् ,तत्त्वदर्शनादस्मात्केनाप्यपूर्वोत्साहेन सहसामर्थ्यं प्रादुर्भवति ततश्च श्रेणिवद्धपरिणामधारा किंवा वीर्योल्लासो वृद्धिं भजते, निखिलानीमानि साधनानि ध्यानकारणानि, चाऽनुमानेन किंवा तर्कवितर्कद्वारेण कृतस्य वस्तु निश्चयस्याऽनन्तरं बुद्धेर्विशुद्धत्वतैक्ष्ण्यविधायको जनः पवित्रध्यानाऽभ्यासं प्रारब्धुं शक्नोति, पुनरात्मध्याने पूर्णप्रेमरसप्रादु-

भवनं तद्विद्वत्तायाः परमफलमस्ति प्रखरविद्वत्तालाभेऽपि यद्यात्मध्यानंप्रति तत्प्रवृत्तिर्नैव भवेत् परं केवलं निखिलशास्त्रपठने वा उपदेशदाने तावन्मात्र एव स विद्वान् कुण्ठगतिर्भवेत्तर्हि ध्रुवं ज्ञातव्यं यदात्मध्यानं विना शास्त्राणामेषां ज्ञानमेतत्केवलं संसारस्यैव कारणमस्ति, यथा च मूढचित्तेभ्योऽज्ञानिजीवेभ्यः पुत्र-धन-स्त्री-धान्यादीनि संसारकारणानि तद्वदात्मज्ञानरहितानां पण्डितानां शास्त्रज्ञानमपि भवत्येकमाजीविकासाधनं, रूपान्तरेण तदप्येकः संसार एव, पुनरस्यां कर्मभूम्यां मनुष्यत्वेन सहपरमोत्कृष्टज्ञानरूपबीजं समुपलभ्य ये जीवा आत्मध्यानकृषिं प्रतिन प्रवर्तन्ते तेऽल्पबुद्धिमन्तो बालजीवा एवेति ज्ञातव्यम् । अहो किं मोहप्राबल्यमस्ति मत्स्यग्रहणकण्टकोपरि स्थितमांसांशं प्रति लुब्धमत्स्यस्येवास्माद्धिश्वविषयसुखान् मुक्तीभवनं तदसौकर्यं कार्यमस्ति पुनरस्मिन् भोगसुखआसक्ता जीवा उत्तमध्यानमपि जहाति, भाविदुःखरूपविषयान्प्रति त आकृष्यन्ते एतादृशमोहायधिगस्तु ।

आत्मतत्त्वस्याऽवेदका विपरीतज्ञानं प्रति प्रवर्तमाना हिताऽहितविवेकंविनाऽन्धस्येव दृश्यमाना वर्तमानकालस्यैव द्रष्टारो भविष्यविचारस्य किंवाऽपेक्षाया अकर्तारो जीवा-भाविकाले अनेक यातनाः सहमानास्तिष्ठन्ति, अहोऽस्मिन्मानसिकपीडा-शारीरिकपीडा-वृद्धाऽवस्था-जन्म-मरण-शोकाद्युपद्रवयुक्तभीषणसंसारे भो जनाः स्वल्पां दृष्टिमपि तु कुर्वन्तु, पुनरेष संसारः कियत्कियद्दुःखैर्भृतोऽस्ति तथापि हे मोहाधीनजीवा यूयं ततः कथमुद्वेगं न प्राप्नुयात ? युष्मभ्यं वैराग्यं नाऽऽविर्भवत्येषा महती शोकवार्ताऽस्ति । यथा पामाव्याधिविशिष्टजनाः कण्डूयनेन सुखं मन्यन्ते परं परिणामेत्वशान्तिर्वर्द्धते तस्येव कियन्तो जनाः कर्त्तव्यमकर्त्तव्यरूपेण तथैवाऽकर्त्तव्यं कर्त्तव्यरूपेण दुःखं च पुनः सुखरूपेण स्वीकुर्वन्ति परमन्ते तद् विरुद्धप्रवर्त्तनं तेभ्यो दुःखदायि भवति, लवणजलं दूरीकृत्वा क्षेत्रे यथा मिष्टजलसंयोगतो बीजं रोहति तस्येव तत्त्वज्ञानश्रवणतः तत्त्वज्ञानात्मक

मिष्टजलसिञ्चनतो ध्यानरूपमिष्टफलानि वर्द्धन्ते, लवणजलसदृशभोगबुद्धिरहर्निशं त्यक्तव्या मिष्टजलतुल्यतत्त्वज्ञानश्रवणरूपसिञ्चनं विधातव्यमेतेन बोधिबीजं वृद्धिं प्राप्य मोक्षफलं दास्यति, पुनरिदमेवाऽऽस्माकमन्तिमं ध्येयं प्राप्तव्यं, कुतर्कवितर्काः सन्ति मनोव्याधयो ध्यानस्य च रिपवो ज्ञानस्य रोधकाः शान्तिविरोधिनश्च श्रद्धाविनाशका अभिमानपोषकाश्च सन्ति ततो मोक्षार्थिजीवैः कुतर्कवितर्केषु मिथ्या कदाग्रहो विधातुं न योग्यः किन्तु मोक्षप्रासादे प्रवेशविधायकात्मतत्त्वं प्रति सद्भावःस्थापनीयोऽस्ति, ये परमशुद्ध-बुद्धाशयवन्तो जीवा आदरपूर्वकत्वेन निरन्तरमेवं शुद्धचैतन्यं ध्यायन्ति ते दुःखस्थानभूतभवस्य कर्मणश्च त्यागं विधाय पुनरखण्डानन्ताऽतीन्द्रियाऽविनाश्यात्मिकसुखं प्राप्य सदाऽऽनन्दमयस्थितिं लभन्ते।

इति श्रीतपगच्छीयगच्छाधिपतिश्रीमन्मुक्तिविजयगणिनां शिष्यश्रीमदाचार्यश्रीविजयकमलसूरीश्वराणां मुख्यपट्टधरशिष्यश्रीमदाचार्यश्रीविजयकेशरसूरीश्वरेण विरचिते श्रीमहावीरतत्त्वाभिधानके ग्रन्थे मोक्षाधिकारः सम्पूर्णतामगात्।

## अष्टमप्रकरणम्।

### " मोक्षाधिकारान्तर्गतचारित्राऽधिकारः "

इमानि सप्त किंवा पुण्यपापतत्त्वे पृथग् यदा गण्येते तर्हि नवतत्त्वानि भवन्ति, पुनरस्मात्तत्त्वज्ञानाज् ज्ञेय-ग्राह्य-त्याज्यवस्तुतत्त्वस्य निश्चयो भवति, ज्ञातव्यौ जीवाऽजीवौ, चाश्रव-बन्धौ त्याज्यौ, संवर-निर्जरा-मोक्षतत्त्वान्युपादेयानि स्युः, निखिलस्याऽस्य निश्चयाऽनन्तरमागच्छत्कर्माणि केनोपायेन निवारणीयानि तदर्थं, प्रयत्नविधानमवशिष्टं स्यात्, तदर्थं च चारित्रग्रहणमावश्यकमेतेनाऽस्मिन्नधिकारे चारित्रसंबन्धिवृत्तान्तं कथयिष्यामः, देशकालसंबन्धिपरामर्शं विधाय, पुनः स्वसबलत्वं निर्बलत्वं च समीक्ष्य, केनापि प्रकारेण स्वसामर्थ्यं विनागोपनेनात्मार्थिजीवैश्चारित्रपथि, पुरुषार्थः कर्त्तव्यः।

प्रबलेच्छाया विद्यमानत्वेपि, यौ शरीरेण स्थिरतापुरुषार्थौ विधातव्यौ स्तस्तौ तु शरीरप्रमाणवत् भवेताम्, प्रभूतबलवति जनेऽपि तस्य कार्यकरणशस्त्राणि दृढानि स्थास्नूनि न स्युस्तर्हि तस्य पुरुषार्थो न तावानुपयोगी भवेदर्थाच्छस्त्रप्रमाणेन पुरुषार्थो भवितुं शक्नोति, यदि पुनः शस्त्राणि निर्बलानिस्युस्तदनन्तरं प्रचुरबलस्य चोपयोगो विधीयते तर्हि शस्त्राणि खण्डितानि भवन्ति, तस्यैव शरीररूपशस्त्रस्य निर्बलत्वेन, तत्सामर्थ्यप्रमाणेन तत्सद्द्वयपुरुषार्थौ विधीयेत तर्हि स सफलो भवेत्, यदि च प्रमाणाऽधिकः परिश्रमो विधीयेत तर्हि शरीरं कार्यं कुर्वन् निरुद्धगतिः स्यात्, पर्यन्ते चाग्रे गत्वा पश्चात्पतनस्यैव भवेत्, तत एव ज्ञानि भिरुच्यते यद्वज्रर्षभनाराचशरीरेणैव मोक्षः प्राप्तुं शक्य स्तदभावेऽन्यशरीरैर्मोक्षो न लभ्यते, ततोऽयं कथनाऽभिप्रायोऽस्ति यथा—मोक्षाऽधिगमे, अन्यसाधनानामुपयोगित्वं, तथैव शरीरस्यापि तावदेवोपयोगित्वं, ततो जनैः पराक्रमत्यागोऽनावश्यकीयः, शरीरेणाऽनेन पुनर्न लभ्यते मोक्षस्तथाऽपि भवेनैकेन मोक्षः प्राप्यैतैतादृशमेकावतारित्वमधुनाऽपि लभ्यते, पुनरन्ते द्विपञ्च—दश—पञ्चदशसु भवेष्वपि मोक्षोऽधिगम्यते, ततोऽन्तिमसंघातनयुक्तशरीरेणापि पुरुषार्थविधाने, न न्यूनत्वं करणीयं, कश्चिन्मनुष्यस्त्वरया याति कश्चिच्च मन्दं मन्दं याति, कश्चिदवक्रेण—सरलेन मार्गेण गच्छति, कश्चिच्च वक्रपथेन गच्छति, गति मार्गयोश्चेत्थं भिन्नत्वे सत्यपि, प्राप्तव्यस्थानत्वेकमेव, करणीयकार्यत्वेकमेव, तच्च कर्मक्षयं विधाय मोक्षपदप्रापणं तदस्ति, पदस्याऽस्य प्राप्तिमार्गः " सम्यक् चारित्रमस्ति " ज्ञानेन वस्तुबोधाऽनन्तरं दर्शनेन च तस्मिन् दृढश्रद्धाऽऽगतेरनन्तरं तस्यैव वर्त्तनं करणीयं, साध्यं प्राप्तव्यं वा स्यात्, स्यादेतत्सम्यक् चारित्रेण, चारित्रेण वर्त्तनं गृह्यते, किंवा चारित्रेण योऽष्ट कर्मणां सञ्चयो जातस्तन्निष्कासनं तत् प्रोच्यते, तत्फलंत्वात्मशुद्धस्वरूपलाभः, किंवाऽऽत्मन आवृताऽनन्तशक्तीनाम् प्रादुष्करणं तद् भवेत् । चारित्रग्राहकजीवानां चोत्साहशारीरिक—मानसिकबलमात्रया च चारित्रस्याऽनेकभेदाः सन्ति, तदपेक्षया च "स्थविरकल्पि

जिनकल्पि स्वयंबुद्ध–प्रत्येकबुद्धभेदैश्चारित्रधारकजीवाश्चतुर्धा सन्ति । न कस्यापि जीवस्य स्वयं हिंसा विधातव्या, नचाऽन्येभ्यो विधापयितव्या, हिंसाविधायकायच नाऽनुमोदनं दातव्यं,हिंसेयं मानसं–वचन–शरीरेण न कर्त्तव्या, नच कारायितव्या,कुर्वतश्च नाऽनुमोदनं कर्त्तव्यं, प्रागुक्तप्रकारेणैवं नवभेदैः प्रथममहाव्रतपालनं कर्त्तव्यम्। द्वितीयमहाव्रते मनोवचन–शरीरेणासत्यं न वदितव्यं, नचाऽन्यैर्वादयितव्यमसत्यवक्तुर्नाऽनुमोदनं कर्त्तव्यमेवं द्वितीयमहाव्रतं परिपालनीयम् ॥ २ ॥ तृतीयमहाव्रते मनोवचन–शरीरैः कृत्वा लघु–बृहच्च चौर्यं न विधातव्यं, नच विधापयितव्यं, चौर्यविधायकस्य प्रशंसाऽपि न कर्त्तव्यास्तथा वस्त्वीशाज्ञया स्व कल्प्यवस्तु, गुर्वाद्याज्ञया स्वीकर्त्तव्यमिदं तृतीयमहाव्रतम् ॥ ३ ॥

चतुर्थमहाव्रते मानस–वचन शरीरैर्देव–मनुष्य तिर्यक्संबन्धि मैथुनं न सेवनीयं, न च सेवयितव्यं, सेवतोनाऽनुमोदनं विधातव्यमेतच्चतुर्थमहाव्रतम् ॥ ४ ॥

पञ्चममहाव्रते धन–धान्यादिनवविध परिग्रहसंग्रहो न करणीयो न कारयितव्यो नाऽनुमोदनं च कुर्वते दातव्यमिति ॥५॥

इत्थं चतुर्विधसाधुभ्यः पञ्चमहाव्रतपालनं भवेत्, विशेषत्वं पुनः संयमसहायकानि धर्मोपकरणानि वस्त्रपात्राणि न्यूनाऽन्यूनत्वेन स्वीकरणीयान्यस्वीकरणीयानि च भवन्ति ततः,तस्मिन्विषये तेषु चतुर्विधसाधुषु भिन्नत्वं दृश्यते । स्थविरकल्पिसाधुषु बाल–ग्लान–वृद्ध–तपस्वि–राजकुमारादिभेदतोऽनेकेषां साधूनामन्तरभावो भवेत्, तेषां च शारीरिकसामर्थ्यस्य दुर्बलत्वेन वस्त्रपात्रादीनामपेक्षा तेभ्यः स्यात्, कल्पेऽस्मिन्नाचार्योपाध्याय–प्रवर्त्तक–स्थविर–गणाऽवच्छेदकादिपदवीनां साधूनामधिकारो भवेत् , निखिलसमुदायनायका गच्छाऽधिपत्याचार्यगणीत्यादिनाऽभिधीयन्ते ते "आचार्याः" सूत्राऽर्थं पाठयन्ति शिष्येभ्यो, निरन्तरं पुनस्तेषां रक्षणं कुर्वन्ति, धर्ममार्गे च प्रेरयन्ति विमार्गैयातस्तान्निवारयन्ति, वारंवारं च प्रेर्ष्याऽग्रे धर्मपथस्य नयन्ति, " पुनरुपा-

ध्यायः" सूत्रपाठमध्यापयति, "प्रवर्त्तकस्तु" धर्मक्रियायां प्रवर्त्तयति, "स्थविरः" ज्ञान-क्रियायां पुनरवस्थायां च वृद्धो भवेत्, चारित्रमार्गेचाऽवसीदतः शिष्यान् प्रोत्साहयुक्तान् विधत्ते, चारित्रे चतान् स्थिरीकरोति, तथैव "गणाऽवच्छेदकः" गच्छसमुदायाय, वस्त्रपात्रादेरखिलसाधनानि प्राप्य ददाति, सर्वमिदंस्थविरकल्पेस्यात् । साध्वीष्वपि मुख्या साध्वी "प्रवर्तिनी" प्रोच्यते, तदाऽऽश्रयेण निखिला अन्याः साध्व्यस्तस्या आज्ञायां निवसन्ति, प्रवर्तिनीयं सूत्राऽर्थं जानाति ज्ञाने वयसि च वृद्धा स्थिरा च भवेत् तथा च निखिलसाध्वीर्यथायोग्यतया साध्वीमार्गे प्रवर्त्तयति सूत्रार्थं च पाठयति, चारित्रमार्गेचताः स्थिरीकरोति सामहत्तराऽप्युच्यते । स्थविरकल्पेऽस्मिन्

रजोहरण-मुखवस्त्रे त्ववश्यमेव स्यातां, तदुपरि वस्त्राणि स्वीकुर्वन्ति, पुनरेकमुष्णमौर्णिकवस्त्रं, द्वेच सूत्रस्याच्छादनवस्त्रे तथाचैकमधःपरिधानवस्त्रमेकंचशयनीयवस्त्रमेकं तदुपर्याच्छादनवस्त्रमेतावद्वस्त्राणि तुन्यूनादपि न्यून्नानि संनिधीकुर्वन्ति, भोजनस्य पात्रं सन्निधौ स्थापयन्ति, पात्रस्थापनाय च, वस्त्रसंबन्ध्युपयोगीन्युपकरणानि भवन्ति एतेन विनोपयोगिपुस्तकानि गृहस्थेभ्यः पठनाय वाचनाय च गृह्णन्ति, यदा च तेषामनुपयोगित्वं स्य त् तदा तान् प्रत्यर्पयन्ति, साधुभ्यः साध्वीनामृत्वादिकारणेन स्वल्पानि विशेषोपकरणानि स्युः, साधवः साध्व्यश्चाष्टमासावधि भिन्नभिन्नस्थले विचरन्ति, वर्षर्तौ चैकस्मिन्स्थले चतुर्मासपर्यन्तं निवसन्ति,पुनरेवमष्टमासानामष्ट चतुर्मासंबंधित्वेकइति,सर्वगणनया नवकल्पविहारः प्रोच्यते चतुर्मासरहितशेषसमये, एकस्मिन्स्थले साधुभ्य, एकमासाऽधिकसमयं निवसनाऽऽज्ञा न स्यात्, किन्त्वावश्यकप्रसङ्गे मासाऽभ्यतन्रमपि विहारं कुर्युः, यत्रतैश्चतुर्मासस्थितिः कृता भवेत्तत्र न्यूनादपिन्यूनं वर्षद्वयान्तरं विना पुनश्चतुर्मासस्थितिर्निषिद्धा, विनाऽन्तरं सहैव द्विश्चतुर्मास विधानं निषिद्धमस्ति, पुनर्यत्रैकमासं स्थितिः कृता भवेत्तत्राऽपि मासद्वयान्तरं विना पुनर्मासकल्पविधानाऽज्ञा नास्ति, कदापि

व्याध्यादिकारणेन निवसनाऽऽवश्यकताऽऽपतेत्तर्ह्यपि तस्मिन् ग्रामेऽन्यस्थानं संभवेत्तावत्तस्मिन्स्थाने न तिष्ठेत्, कदाचित्तत्रैव स्थाने निवसनावश्यकताऽपतेत्तर्हि यस्मिन्स्थाने मासकल्पः कृतो भवेत्ततो द्वितीयभागे किंवा द्वितीयकोणे गत्वा निवसेत्तथापि सामर्थ्ये सति भूयः समयं तत्र न निवसेत्, यदि च शरीरं गमनाऽशक्तं स्यात् किंवा किञ्चिदपूर्वज्ञानं वा विद्या वर्द्धेत, किंवा तादृशसमागमोऽन्यस्थले न संभवेत्तर्हि भूयः समयं प्राशुक्तकल्पमर्यादां संरक्ष्य निवसितुं शक्येत, न्यूनादपि न्यूनौ द्वौ साधू विचरेतां, तत्राप्येकसाधुः गीतार्थो भवेदेतेन सूत्रार्थरहस्यज्ञायको भवेत्, तदाश्रयेण च नैकसाधवो विचरेयुः।

साधवः प्रथमप्रहरे नूतनं पठेयुः, द्वितीयप्रहरे च तदर्थं विचारयेयुः, सशक्तसाधवोऽह्नि भोजनमेकवारं कुर्युः, ग्लान-बाल-वृद्धाऽधिकाऽभ्यासविधायकाश्चकतो भूयो वारानपि निर्दोषभोजनादि विधातुं शास्त्राज्ञां लभेरन्, ग्रीष्मर्तुतः शीततौं, शीतर्तुतश्च वर्षतौं, विशेषप्रकारतस्तपश्चर्या विधातव्या, चतुर्मासे दृढशरीरिभिः साधुभिर्घृतदुग्धादिविकृतेस्त्यागो विधातव्यः, द्विरहर्निशं प्रतिक्रमणं कर्त्तव्यं, रात्रौ च स्वाध्यायं विधाय ध्यानं कर्त्तव्यं, मिथः पठनपाठनं विधातव्यमहोरात्रस्य महद्भागो नवीनज्ञानाऽभ्यास-स्वाऽध्यायध्यानेषु निर्गमयितव्यः। साधूनां साध्वीनांचाचारः प्रायः सदृश एव, विशेषत्वमत्र केवलं, साधुतः साध्वीनां कानिचिदधिकानि वस्त्राणि भवन्ति, पुनरेकमासस्य कल्पस्तासां न भवति किंतु द्वयोर्द्वयोः मासयोः कल्पो भवेत्, द्वयोश्च मासयोरनन्तरं विधातव्यो विहारोऽवश्यं, यावच्चलनसामर्थ्यं भवेत्तावदेकस्मिन्स्थलेऽन्यचतुर्मासो न कर्त्तव्यः त्रिसाध्वीभिर्न्यूनसाध्वीभिर्विहारो न करणीयः, साध्वीभिः सुमनुष्यवसतिभागे स्थातव्यं, साधवस्तु वनेऽपि स्थातुं शक्नुवन्ति, वृक्षाऽधोऽपि रात्रिवासं विधातु प्रभवन्ति, गुरुपरीक्षोत्तीर्णानन्तरं नूतनाशिष्याः कर्त्तव्या स्तेष्वपि च तेषां पितॄणां स्त्रियश्चाज्ञालाभस्य पश्चाद् दीक्षा तेभ्यो दातव्या, यदि च दीक्षा ग्राहिका स्त्री स्यात्तर्हि तस्याः पत्युर्मुख्याज्ञा ग्रहीतव्या, पुनः

पत्युरभावे तस्या मातुः पितुः श्वशुरवर्गस्य पुत्रादेश्चाज्ञामधिगम्य, तदनन्तरं दीक्षा दातव्या; निखिलोऽयं स्थविरकल्पिसाधुसाध्वीनामाचारोऽस्ति, पुनरित्थमाचारे दृढत्वमाप्ता मुनय आयतौ भूयःक्लिष्टकर्माणि विनाशयितुं समुदायतः पृथग् भूत्वा, जिनकल्पमार्गं स्वीकुर्वन्ति, मार्गोऽयमतीवकठिनः, पूर्वप्रदर्शिताचार्योपाध्याय-प्रवर्त्तक-स्थविर-गणाऽवच्छेदकादिसाधवोऽस्मिन्मार्गे प्रायः प्रवर्त्तन्ते विशेषतः। जिनस्य कल्प आचारो जिनकल्पः, जिनेश्वरस्येव महच्छौर्यविशिष्ट-निरपेक्षतायुक्त-स्वाऽवलंबिप्रवृत्तिरस्मिन्मार्गे स्यात्, पुनरिमे जिनकल्पिसाधवः केचिद् वस्त्रपात्राणि स्वीकुर्वन्ति केचिच्च नाऽपि स्वीकुर्वन्ति, हस्तपात्रलब्धयश्च केचिद् जिनकल्पिसाधवः पात्राणि न स्वीकुर्वन्ति तथैव च विना वस्त्रैर्येषां कार्यनिर्वाहो भवति ते वस्त्राणि त्यजन्ति, किन्तु रजोहरणमुखवस्त्रेतु भवेतामेव, मार्गस्याऽस्य स्वीकरणात् प्राक् स्थविरकल्पे स्थित्वा ते, आदौ जिनकल्पवद् वर्तितुं तुलनाः किंवा संभृतीः कुर्वन्ति, पुनरादौ: तपस्तुलनां विदधते तावता, विशेषतपोविधानाऽभ्यासं कुर्वन्ति; यतो देवाद्युपसर्गप्रसङ्गे क्षुधा, तान् चालयितुं न शक्नुयाचतः, एकोपवासमारभ्य षट्मासपर्यन्तं यावदुपवासाः स्युः तावन्न क्षुधा चालयेत्तावतीं तत्परतां कुर्वन्ति। द्वितीयां च सत्त्वभावनां च तोलयन्ति, तुलनायामस्यां ते, भयनिद्रोपरि स्वाऽधीनत्वमधिगच्छन्ति, पुनरेतदर्थमादौ स्वयं यत्र निवसन्ति तत्र स्थाने तिष्ठान्तिष्ठन् कायोत्सर्गं विदधते-कायोत्सर्ग मुद्रायां ध्यानं कुर्वन्ति, तदनन्तरमुपाश्रयाद् बहिर्ध्यानं निर्मान्ति, तत्पश्चाच्चतुष्पथे-चत्वरे तिष्ठन्तः कायोत्सर्गमुद्रायां ध्यानं विदधते, तदनन्तरं च निर्जनप्रदेशवत्सु शून्यगृहेषु कायोत्सर्गं कुर्वन्ति, तदनन्तरमन्ततः श्मशानादिभययुक्तभूम्यां निर्भयत्वेन कायोत्सर्गे स्थित्वा ध्यानं विदधते, इत्थं निद्राजयस्य स्वसत्त्वोत्तेजनकारिकायाः सत्त्वभावनायाश्च तुलनां कुर्वन्ति, पुनः स्वयं जानीयादेवं यदथ निद्रा किंवा भय उपसर्गं नैवं करिष्यति तदनन्तरं ते वने निवसितुं प्रारभन्ते॥ २॥

तृतीयां सूत्रभावनां च भावयन्ति, सूत्रस्य सिद्धान्तस्य ज्ञानं चैतावत्प्रमाणं दृढं कुर्वन्ति यथा दीर्घसमयान्तं यदि परावर्त्तनं न कुर्युस्तथापि स्वनाम्न इव न विस्मरान्ति, यदा च पुनः सूत्रपरावर्त्तनं विदधति तदा ततः कालमानं निष्कासयन्ति, यदेतावद्गणनयैतावत्समयो भवति, तत्प्रमाणेन समयोऽपि तावानेव जातो भवेदथ तत्सन्निधौ पुस्तकानि न विद्येरन् ततो निखिल ज्ञानं मुखपाठेनैव भवेत् ॥ ३ ॥

चतुर्थीमेकत्वभावनामभ्यस्यन्ति ते पुनरादौ साधुसमुदाये निवसन्तोऽपि, ततः पृथग् भवेयुस्तस्यैव परस्पराऽऽलाप संलापस्य कार्यं पुनरन्योन्यकथाप्रबन्धादिकार्याणि च निवारयन्ति प्रथममेवं बाह्यममत्वं विजहति, तदनन्तरमन्ततो देहोप-ध्याद्याभ्यन्तरममत्वमपिचात्मतो भिन्नत्वेनाऽवगम्य, तदनन्तरं त्यजन्ति इत्थमेकत्वभावनाऽभ्यासेन वनाऽरण्यश्मशानादि स्थानेषु पुनरेकाकिनिवसनप्रसङ्गसमागच्छेत्तदा तेभ्यः स्वल्पमप्यनिष्टत्वं खेदोवा न संभवेत्किन्त्वेकान्तवास स्तेषां ज्ञान–ध्यान वृद्धौ सहायताकारी भवेत् ॥ ४ ॥

पञ्चमीं बलभावनां ते भ्यस्यन्ति, भावनाया अस्या अभ्यासस्य मुख्यत्वेनोपयोगित्वमेतदस्ति, य दरण्ये शीत–ताप–वर्षासमयेऽपि वस्त्राऽभाववत्यां स्थित्यां निवसनं च स्यात्तदेव, तेनाधुनिकमहद्व्यायामविधायकमल्लानामिव ते, स्वाऽवयवान् दृढीकुर्वन्ति, तेन च कृत्वा तेभ्यः शीत–तापादीनां स्वल्पोपि प्रभावो न भवेत्, तेन जिनकल्पिसाधूनां शारीरिकबलमन्येभ्योऽतीवदृढं स्यात्तेन च सह ते मनोबलमपि दृढं कुर्वन्ति, यतस्तपादिविधानेन शरीरबलस्य निर्बलत्वं भवे-त्तथापि धृतिबलेन ते परिषहोपसर्गादितः पराभवं न लभन्ते ॥ ५ ॥

इत्थं पञ्चविधतुलनां विधाय, स्वस्य तस्मिन्मार्गे प्रवेष्टुं यदा योग्यता ज्ञायेरन् तदा, स्थविरकल्पमार्गं विहाय

जिनकल्पमार्गं स्वीकुर्वन्ति, ते च कदापि सहस्युरेकाऽधिकाः, साधुवेषत्वेन च रजोहरण–मुखवस्त्रे सन्निधौ स्थापयन्ति, पुनरमुक विधरजोहरणस्वीकारे तेषामाग्रहो न स्यात् ततो मयूरपिच्छस्याऽपि रजोहरणं भवत्, किन्तु वाहुल्येन रजोहरणमौर्णिकमेव स्यात् । तृतीयप्रहरे च ते भिक्षामात्तुं निस्सरन्ति, करपात्रे च भुञ्जते जलमपि भोजनेन सहैव पिबन्ति,क्वापि च विना जलेनाऽपि व्यवहरन्ति, तेऽहर्निशमेकवारमेवाहारं कुर्युरेवस्तादृशनियमो न, परमुपवासमपि कुर्वन्ति, तथाप्येकवारतोऽधिकवारान् भोजनं न स्वीकुर्वन्ति, पुना रोगादिकारणेनाऽपि ते न स्वीकुर्वन्त्यपवादं, नौषधाद्युपायं कारयन्ति, तथैवाऽन्येभ्यः सेवामपि न विधापयन्ति, च मध्याह्नसमयादनन्तरं विदधति विहारं, ग्रामनिकटे एकरात्रिपर्यन्तं निवसन्ति, पुरपर्यन्ते पञ्च-रात्रिपर्यन्तं निवसन्ति, परीषहोपसर्गान् च सहन्ते, भूयः समयमेकाकिनो विचरन्ति, प्रायो मौनतयाऽटन्ति, कदापि धर्मो-पदेशमपि ददति, पृथ्व्यां चोत्कटुकासनेन तिष्ठन्ति, शयनार्थे च पृथ्वी, पुनराकाशं " प्रावरणं " स्यात्, यदि केचिद् व्याघ्र–सिंहप्रभृतिप्राणिनः सन्मुखं समागच्छेयुस्तर्हि ते तद्भयादुन्मार्गे न यान्ति, किन्तु यथार्थवीरपुरुषस्येव तत्प्रति सन्मुखमेव गच्छेयुः, यत्रदिनमस्ततां यायात्तत्रैव कायोत्सर्गसहिताः किंवा ध्यानपरायणा भवन्ति, ये ये विघ्नाः समागच्छेयुस्ते ते सोढव्याः, समभावे च स्थातव्यं, न दातव्यश्च क्रोधादिभ्योऽवकाशो ध्यानपरायणीभूयात्मशुद्धस्वरूपं प्रादुष्क्रियते; पुनः स्वाऽवलम्बिनश्च ते भवन्ति, न चाऽन्योपर्याधारं स्थापयन्ति, नैव गृह्णन्त्यन्यसहायतां पुनरुदयप्राप्तानि कर्माणि सहन्ते, विधायचोदीरणां, सत्तापतितकर्माणि वहिरानीय, समभावेन चोपभुज्य निर्जरां कुर्वन्ति, तेषां च ज्ञानं नवमपूर्वादारभ्य, दशमपूर्वपर्यन्तं स्यात् पुनरप्रमत्तदशा प्रशस्या तेषां विद्येत, शरीरं च तेषां प्रथमसंहननयुक्तं वज्रस्येव दृढं भवेत्, असौ जिनकल्पिसाधूनां मार्गः कथ्यते ।

## " स्वयंबुद्धस्य स्वरूपं प्रोच्यते "

स्वेनैव बुद्धा आत्मनि प्रबुद्धाः सत्यज्ञातारस्ते "स्वयं बुद्धाऽभिधीयन्ते" यद्यपि गतजन्मानि तेषामपि गुरुः स्यात् किन्त्वियं वार्त्ता तु वर्त्तमानभवस्याश्रयत्वेन, भवेचाऽस्मिन् न केनापि, तेभ्यो वोधो दत्तो भवेत्। किन्तु जातिस्मरणज्ञानेन-पूर्वभवज्ञानेन,ते स्वयं स्वात्मना मार्गेऽस्मिन् गन्तारः स्युः ततश्च ते स्वयंबुद्धाः प्रोच्यन्ते, तेभ्यो निखिलेभ्यश्च पूर्वजन्मज्ञानंतु भवेदेव, ततश्च तेभ्यः सम्यक्दर्शनमपि प्रादुर्भूतं भवत्, यदि च तेषां पूर्वपठितज्ञानंस्यात्तर्हि तेभ्यो देवाः साधुवेषरजोहरणमुखवस्त्रादि वस्तुनि यच्छन्ति, यदि च पूर्वज्ञानंनभवेन्नूतनपठनं वास्यात्तर्हि गुरुनिकटे यान्ति, गुरुश्च तेभ्यो वेषं यच्छन्ति, साधुवेषं च रजोहरणं-मुखवस्त्रमेकमौणिकवस्त्रं द्वे च सूत्रवस्त्रे स्युः पात्रमेकं च भवेत्, ते चैकाकिनोऽपि निवसन्ति, पुनः साधुसमुदाये, नवीनज्ञानाऽध्ययनाय,किंवा स्वेच्छयाऽपि निवसन्ति, पूर्वजन्मज्ञानेन च तेभ्योधर्मकर्मफलानामनुभवः प्रत्यक्षतया जातोभवेदेतावता ज्ञानध्यानेऽग्रे संवर्द्धयात्मनो निखिलशक्तिप्रादुष्करणार्थं, प्रवलपुरुषार्थमप्रमत्तत्वेन स्थित्वा ते कुर्वन्ति ॥

## " अथ प्रत्येकबुद्धस्वरूपमभिधीयते "

वाह्यं किमपि कारणं दृष्ट्वा, ततश्च संसाराऽनित्यत्वमवगम्य, वोधं प्राप्नुयुस्ते " प्रत्येकबुद्धाः " अभिधीयन्ते, यथा करकण्डुराज्ञादौ चातीव शोभनो-वलवद्वृषभः प्रेक्षितस्तमेव च वृषभं तदनन्तरं दीर्घदिवसेषु, जराजर्जरित-रूपविहीन-गलित शरीरवन्तं निरीक्ष्य प्रतिबुद्धः, स्वशरीरस्यापि च भविष्यकाले, पुनरेतादृशीं स्थितिं ज्ञात्वा, प्रबुद्धः सन् साधुजीवनं स्वीकृतमेवं पुनः केचिद्विनश्यतोमेघान्प्रेक्ष्य, तर्हि केचिच्च स्वल्पेनैव समयेनाम्रवृक्षं नवपल्लवितं स्थाणुस्वरूपं, स्थाणोरिव नामाऽवशेषं निरीक्ष्य-वोधं समधिगताः-प्रबुद्धास्ते सर्वे प्रत्येकबुद्धा अभिधीयन्ते, प्रत्येकबुद्धेभ्य एभ्यो जातिस्मरणतः पूर्वजन्मनो ज्ञानमपि भवेत्,

न्यूनादपिन्यूनं चैकादशाङ्गज्ञानतं आरभ्य, दशमपूर्वे किञ्चिन्न्यूनमेतावद्भवेच्छुतज्ञानमिदं सर्वं पूर्वभवे पठितं स्यात्, पुनरेतादृश पूर्वाऽभ्यासेनैव ते कञ्चिदेवमेकं वृत्तान्तं प्रेक्ष्य, गम्भीरत्वयुक्ताः सहसा प्रबुद्धा भवन्ति, अन्यथा ततोऽपि विशेषानानैकदृष्टान्तानां प्रत्यक्षतया दर्शनेऽपि नोद्भवति वैराग्यं, किंवा न जायते जातिस्मरणज्ञानं, तादृशेभ्यः प्रत्येकबुद्धेभ्यः शासनदेवाः साधु वेषमर्पयन्ति, रजोहरण—मुखवस्त्रे द्वे साधुचिह्नं तत्सन्निधौ भवेतां, कदापि साधुचिह्नं तत्समीपे नाऽपिस्यात्, तथापि वद्धतेनमतीव विशुद्धमात्मजागृतिभृतं च स्यादिमे प्रत्येकबुद्धा गच्छसमुदाये न निवसन्ति किन्त्वेकाकिनो विहरन्ति, पुनरहर्निशमात्मध्याने तत्परा भवन्ति । प्रागुक्तचतुर्विधसाधव आचारभेदेन कृत्वा दर्शिताः, तेषां च सर्वेषां विद्यमानत्वं तीर्थङ्करदेवस्य भगवन्महावीरस्य समये एवासीत्, तेषां सर्वेषां क्रियासु, शक्त्यनुसारेण विभिन्नत्वे सत्यपि, निखिलसाधूनां साध्यंत्वेकमेव स्यात् ।

## "त्यागिजीवनम्"

चतुर्विधाश्चेमे साधवस्त्यागिजीवनवन्तो भूत्वा, चारित्रमार्गे च सर्वविधपापारम्भं त्यजन्ति पुनः पराधीनत्वकारणानि गृहकुटुम्बस्त्रीप्रभृतिविबन्धनानि विजहति, निरन्तरं चात्मोपयोगो जागृतो विधीयते, शरीरशोभायाः कारणं संस्कारंनांगीकुर्युः, शीर्षकेशानां लुञ्चनं कुर्वन्ति येन चात्मभानं विस्मयेत तादृशसंयोगं मनुष्यादीनां वा परिचयं नविदधते, पराऽपेक्षां च न कुर्वन्ति, पुनरात्मवलोपरि श्रद्धां विधायाऽखिलाः प्रवृत्तीस्ते कुर्वन्ति, निर्विकारित्वेन स्वचित्तं रक्षन्ति, तथैवाऽन्येभ्यो दयोत्पद्यते तादृशी काचिदपि याचना न विधीयते, किन्तु धर्मनियमाऽनुसारतो यत् स्वाभाविकभिक्षायां वस्तु लभ्येत तस्मिन् संतुष्यन्ति, क्रोधादिकषायान् च दूरीकुर्वन्ति, वशीकुर्वन्ति च पञ्चेन्द्रियाणि, ते चेष्टाऽनिष्टविषये रागद्वेषौ न कुर्वन्ति,—ज्ञान—क्रिययोर्देश—कालानुसारेण प्रवर्तमाना गुरुसमीपे दीक्षां स्वीकुर्वन्ति । आत्मजागृतिशून्येभ्यः केवलं क्रियामार्गे एव प्रमोदविधायकेभ्यो गुरु-

च स्वयं विनाज्ञानेन संदूभूतमार्गे ज्ञातुं न पारयन्ति ते,
भ्य, आत्मकल्याणं न भवेद्यतस्तेषां प्रवृत्तिरन्धजनानां सदृशी वर्तते, ये च स्वयं विनाज्ञानेन संदूभूतमार्गे ज्ञातुं न पारयन्ति ते, स्वयं तस्मिन्मार्गे न प्रवर्तेरन्, तेऽपि प्रभुपथस्य
स्वाश्रितानन्यान्केन विधेन मार्गाऽग्रत्वे नयेयुः तथैव ये ज्ञानस्य वेदकाः सन्तः स्वयं तस्मिन्मार्गे न प्रवर्तेरन्, तेऽपि प्रभुपथस्य
नायकत्वेन भवितुं नाऽर्हन्ति, यद्यपि ज्ञाने द्रष्टृत्वंत्वस्तिपरं, यथाऽर्हत्वेन, प्रवृत्ति-निवृत्ति न विधीयते ततो गमनसामर्थ्यरहितं
तद्ज्ञानं खञ्जसदृशं स्यात्, तत आत्मजागृतिभृतां, तथैव तत्त्वज्ञानोत्तमचारित्रप्रवर्त्तकानां, गुणिनां गुरूणां सन्निधौ चात्मक-
ल्याणेच्छुजीवैः संसारपारमधिगन्तुं चारित्रग्रहणं कर्त्तव्यं, तन्निकटे तदाश्रयेण च स्थातव्यं। पञ्चमहाव्रतपालनेन सह पञ्चसमि-
तीनां त्रिगुप्तीनां च पालनं विधातव्यं,पथि गच्छता वनस्पतिनां किंवा त्रसादिनां केषामपि जीवानां हिंसा किंवा दुःखं न स्यात्ता-
दृशउपयोगो विधातव्यः, पुनस्तादृशजीवयुक्तपृथ्वीतः पार्श्वेण गतव्यं, गमने च सार्द्धत्रिहस्तप्रमाणपृथ्व्या उपरि दृष्टिः पतेत्ता
दृशविधयाऽधोदृष्टया यातव्यं, तथैव च संलापेऽतीव सावधानत्वं स्वीकर्त्तव्यं, यथासंभवं च विना कारणं न वक्तव्यं, कदापि
वचनसंभव आपतेच्चर्हि प्रियमन्याहितकारकं च वचनं वक्तव्यं, तेन विना मौनावलम्बनं विधेयं ॥२॥
गृहस्थेन निजार्थे यद्भोजनं कृतं स्यात्ततः सात्त्विकाहारो द्विचत्वारिंशद्दोषरहितो ग्रहीतव्यो देहयापनाय ॥ ३ ॥
यदा किञ्चिद् वस्त्रपात्रादि वस्तु गृह्यते मुच्यते वा तदा, कस्माअपि जीवाय दुःखं न भवेत् किंवा जीवविराधना नस्यात्तादृशं
सावधानत्वं कर्त्तव्यं ॥ ४ ॥ मूत्रमलादित्यागेऽपि जीवरहितनिर्दोषपृथ्वी स्वीकर्त्तव्या, कस्मा अपि जीवायास्मान्निमित्तत्वेन
दुःखं नस्यात् तदर्थं तत्परत्वं स्वीकर्त्तव्यं ॥ ५ ॥ मनसि कश्चिदशुभसङ्कल्पो नोत्थापयितव्यो यद्युत्तिष्ठेत्तर्हि विरमयितव्यः,
किंवा तद्विरोधिविचारेणाऽन्यरूपो विधातव्यः, कर्त्तव्याः सुविचाराः, किंवा कोऽपि सङ्कल्पविकल्पो नोत्तिष्ठेत्तादृशविधेनात्मो-
पयोगेन स्थातव्यं।

सेवनीयं सर्वथाऽमुकसमयं मौनं, वचनप्रसङ्गे च सूत्रोक्तं मितं-पथ्यं-सत्यं च वक्तव्यं, स्यादियं वचनगुप्तिः,

विधातव्यं च कायोत्सर्गे शरीरस्थैर्यं, ध्यानादिषु च वर्धितव्यं स्थिरत्वं, विनाकारणेन चाऽटनमितस्ततो न कार्यं किन्तु संकुच्यांगोपाङ्गं स्थिरासननेन स्थातव्यमिदं शरीरस्थैर्यं ध्यानादिषु मानसस्थैर्यविधाने चोपयोगि साधनं भवेदियं कायगुप्तिः कथ्यते। इमाः पञ्च समितयस्तिस्रो गुप्तयश्चैता अष्ट प्रवचनमातरोऽभिधीयन्ते, यथा च मातरः पुत्रान् पालयन्ति तथैव साधुजीवनरक्षिका इमा मातरः सन्ति। द्वयोः प्रातःकाल-सायंकालयोरावश्यकक्रिया विधातव्या, पञ्चमहाव्रतानि, पञ्चसमितयस्तिस्रो गुप्तय इन्द्रियाणि कषाया इत्यादीनि वस्तूनि सन्ति तेषु तेषु यद्यद् गुरु-देवाज्ञाविरुद्धं प्रवर्त्तनं कृतं भवेत्तदर्थं प्रातः सायं च द्विवारं तन्निराक्षणस्वरूपाऽऽवश्यकक्रियाऽस्ति, यदि च दोषसंभवः स्यात्तर्हि तस्य क्षमां याचयित्वा प्रायश्चित्तमुपादाय च स्वस्खलना शोधनीया, त्रुटितांशो योजयितव्यः पुनस्तास्मिन्दोषसंभवरूपछिद्रत्वं ना पतेदिति सावधानत्वं स्वीकर्त्तव्यं। शयनीयं भूमेरुपरि, कर्त्तव्यं च भोजनमेकवारं, न च विधातव्या स्नानादिशुश्रूषा, निखिलाश्चेमे आचाराः पालयितव्याः, विहातव्यश्च प्रमादः, प्रतिक्षणमात्मस्मृतिर्न विस्मर्यते तस्य सावधानता स्थापनीया, यदिचात्मभानं विस्मर्यते तदा जागृतिर्वर्द्धनीया यथा वर्द्धेतऽऽत्मजागृति स्तादृशाभ्यास एधितव्य स्तादृशनिमित्तानि सेवनीयान्येधितव्यं च ज्ञानमधीतस्मरणरूपस्वाध्यायः कर्त्तव्यः, जड-चैतन्यभिन्नत्वविधानाय नवीनज्ञानाऽभ्यासो विधातव्यः, निखिलानि च प्रतिबन्धकारणानि विनाश्योग्रविहारेण विचरितव्यं, सामर्थ्ये च सति ननिवसनीयमेकस्मिन्स्थलेऽधिकत्वेन, पुनः कर्त्तव्यश्चाष्टमासपर्यन्तं विहारः, चतुर्मासे एकस्मिन्स्थाने निवसितव्यं सामर्थ्यानुसारेण तपोविधातव्यं, विकारोत्पादकानि दुग्धघृतादिवस्तूनि त्याज्यानि कर्त्तव्या ज्ञान-

दर्शनचारित्रेषुच वृद्धिः, सत्यंचावबुध्य तदनन्तरमेव दातव्योऽन्येभ्य उपदेशः, यावद् यथार्थतया न ज्ञायेत स्याद्वादमार्गस्ताव-न्मौनीभूयाऽभ्यासवृद्धि र्विधातव्या, सत्यज्ञानं विना प्रत्युत लोकानुन्मार्गे समारोहणतः संसारवृद्धिर्भवति, यथासंभवं लोकान् सुमार्गोपर्यारोहयितव्यं, कदापि च तादृशं ज्ञानं न भवेत्तर्हि मौनाऽवलम्बनं श्रेयस्करं, किन्तु लोकानुन्मार्गे नयनं हितकरं न स्यात् । चारित्रसहायोपकरण-स्थानरूपवसति-साधु-साध्वी-श्रावक-श्राविकात्मकसंघ-नवकल्पिविहार-देहयापनाहार-जलादिसामान्येष्वेषु निखिलेषु, यानि कानिचित्बन्धनकारणरूपाणि स्युस्तानि सर्वाणि दूरीकर्त्तव्यानि, तदुपयोगिनी ज्ञा-नादिसहायता दातव्या, तेषु च सुप्तात्मशक्तिर्महती प्रबोधयितव्या, न च तास्मिन्स्वल्पमपि वैषम्यं विधातव्यं । भोजनपानाऽऽसनोत्थान-निवसन-गमनाऽऽगमनेष्वेतत्सर्वस्थानेष्वात्मोपयोगोजागरितव्यः, न विस्मरितव्यं लक्ष्यं-साध्यं वा, तस्य सावधानता रक्षयितव्या, नस्यादन्यजीवानां हिंसा तत्प्रति संपूर्णत्वेन ध्यानं दातव्यं, प्रमादपूर्वकगमनाऽऽगमनविधायकानां साधूनामपि संसारवृद्धिकारिका हिंसा भवेत्, यथा च ज्वरिजनान् घृतभोजनविधापनतो रोगवृद्ध्यासह तद्दुःखेऽपि वृद्धिर्भवति, त-देव घृतभोजनं यदि ज्वररहितजनेभ्योः यदिदीयते तदा पुष्टिदायकत्वेन सुखदायि भवति, तस्यैवोपयोगपूर्वकप्रवर्त्तकेभ्य आहार-विहा-रादि गुणकारि भवेत्, तदेव चाहारविहारादिकार्यं, विनोपयोगेन प्रमादिजीवेभ्यः कर्मबन्धरूपदोषाय स्यात् । भवेयुः ते ज्ञानवन्तस्तथापि, यदि ते परपीडाविधायकाः स्युस्तर्हि तेषामवश्यमेव चारित्रं दूषितं भवेद्, यथा च दीपः प्रकाशस्वरूपस्तथापि प्रचुरतापेन, मलिनकज्जलमुत्पादयति तद्वत्साधुर्ज्ञानप्रकाशवान् सन्नपि, यद्यन्येभ्यः पीडां विधत्ते तदा, स पापरूपमलमुत्पाद्य स्वचारित्रं च मलिनं करोति ।

## " भवाऽभिनन्दिजीवस्वरूपम् "

संसारतो विरक्तेभ्यो जीवेभ्य एव चारित्रं वर्त्तते, किन्तु ये, मायिकविषयेष्वेषु तथा संसारे पुनरानन्दमन्तारः सन्ति किंवा विश्वे एव सुखमेवं ज्ञातारः सन्ति तथा तस्य सुखस्यैवेच्छुका जीवा " भवाऽभिनन्दिनः " प्रोच्यन्ते, कदापि तेन साधुवेषो गृहीतः स्यात्तथापि तेषु चारित्रगुणो नागच्छति, पुनस्तेषां चारित्रं किंवा धर्माऽऽचरणं बहिर्दृश्यैतैतावदेव मात्रं स्यात्, किन्तु तदभ्यन्तराऽध्यवसायास्तु केवलं लोकेभ्यः प्रीणनाय संसारे सुखीभवनायैवस्युः । अज्ञानदशालोभपरायणता–भीरुतेपौलुता–शठतेत्यादिलक्षणानि भवाभिनन्दिजीवेषु स्वाभाविकानि लभ्यन्ते, पुनस्तैरारब्धानि सत्यकार्याणि निष्फलानि भवन्ति, दोषेणाऽनेन ते चाऽग्रे वर्द्धितुं न प्रभवन्ति, सत्यलक्ष्यं विना किंवाऽऽत्मदृष्टिजागृतिं विना, ये जीवा हृदयाऽभ्यन्तरे, नैकविधवासनां भृत्वा, मलिनतां च गृहीत्वा, लोकाराधनाय, किंवाऽनुकूलत्वकरणाय स्वोपयोगित्वेन लोका भवेयुरेतदर्थं धार्मिकक्रियाः कुर्वन्ति तस्यैवनाम " लोकपङ्क्तिरिति " ज्ञातव्यं, तस्याः लोकपङ्क्तेः फलमपि लौकिकमेवागच्छेत्, पुनरेता दृश्येव क्रियाऽपि, यैरात्मजागृतिपूर्वकत्वेनात्मविशुद्धिरूपधर्माय विधीयते, तेभ्यः कल्याणस्य साधनरूपा भवति, परं लोकार्थे धर्मविधानंत्वकल्याणायैव भवेत्, पुनरात्मस्वरूपमादुष्कर्तुं निखिलाः प्रवृत्तयः कर्मशुद्धेः कारणरूपा भवन्ति, ये च परमशान्तेर्निकटभूमिकापर्यन्ते प्राप्ता भवेयुस्तादृशा एव मोक्षार्थं प्रवर्त्तन्ते, परं संसारवासनायुक्तजनास्तत्प्रति भवर्तितुं न प्रभवन्ति । भोगानां तत्साधनानां च विहायकजनानामागन्तुकपापानि निरुध्यन्ते, पूर्वविहितपापानां च क्षयोभवेत्, ततश्च तेषां मुक्तिर्भवति, पुनरिमां मुक्तिं प्रति तेषां भवाभिनन्दिजीवानां द्वेषो भवेत्, ततश्चाऽयमेव मुक्तिद्वेषः संसारपरिभ्रमणविधायक भवबीजरूपोऽस्ति, तद्वियोगेनैव स्वस्य मोक्षमार्गाणाऽग्रे वर्द्धितुं शक्नुवन्ति [illegible] द्वेषो न स्यात्तेऽपि स्तुत्यर्हाः

सन्ति, ते च महात्मानोऽवश्यमेव कल्याणफलभोक्तारो भवन्ति। सम्यक्ज्ञान-दर्शन-चारित्ररूपा मोक्षस्य ये उपाया जिनेश्वरेण वर्णिता स्तान्प्रति प्रवर्त्तनं तु दूरे तिष्ठतु परं, पापिजीवास्तु प्रत्युत, तान् सदुपायान् गर्हन्ति, यथा च सम्यक्ज्ञानाद्याराधनस्य महत्फलं दर्शितं तथैव, तद्विराधकायाऽपि महदनर्थलाभोऽपि कथितः, पुनर्यथोच्चस्थानात्पतनं, विषमिश्रिताऽन्नेन तृप्तिविधानं च दुःखरूपं भवति तथैव, ज्ञानादिसम्यकमार्गस्य मलिनीकरणेन, तन्निन्दनेन किंवा तत्प्रति द्वेषत्वेनाऽनर्थलाभो भवेत्।

( प्रमादस्वरूपं प्रोच्यते )

मरिष्यन्ति किंवा पीडां प्राप्स्यन्ति जीवां इति तदनपेक्ष्य, विना यत्नां प्रवर्त्तमानानां जीवानां हिंसा भवत्येव, जीवा म्रियेरन् किंवा न म्रियेरन् तथापि येऽधो दृष्टिं स्थाप्योपयोगजागृति पूर्वकं यान्ति तेषां शरीरस्याऽस्थैर्येण जीवविराधना स्याच्चह्यपि यत्ना-पूर्वकगच्छतां जीवानां कर्मबन्धो न भवेद्यतस्तेषूपयोगजागृतिमन्येभ्यो हानिर्नस्याच्चादृशाऽध्यवसायपूर्वकत्वेन कुर्वन्तआसते, यथा च विनाऽऽसक्तिं कृतवस्तुसंग्रहः कर्मबन्धस्य कारणं न स्यात्, तद्वत्प्रमादविहायकेभ्यो वधाध्यवसायं विना कर्मबन्धो न भवति। यथा च सर्पः कञ्चुकं त्यजति किन्तु विषं न जहाति, तद्वत्प्रमादिजन उपरिष्टाद् बाह्यपरिग्रहं जहाति, किन्तु रागद्वेषाद्याभ्यंतरग्रन्थिं न त्यजति ततस्तस्य बाह्यत्यागः कर्मनिर्जरार्थं न भवेदान्तरशुद्धिर्यदिस्यात्तदैव बाह्यशुद्धेर्मूल्यं भवेत्, बहिष्टादतीव बकाः सन्ति श्वेताः, परमाभ्यन्तरमीलनत्वेन नैकमत्स्यान् ग्रसति, तस्येदं मलिनत्वध्यानं, तदधोगतेः कारणं स्यात् यो योगी षट्जीवनिकाय जीवानां रक्षणे भवेत् प्रमादी स तत्प्रमादेन बध्यते, यथा कमलानि जले स्थित्वाऽपि निर्लेपानि भवन्ति तद्वदप्रमत्तयोगी किंवाऽप्र-मादी जीव उपयोगजागृत्या न बध्यते, यस्याऽस्य लोकस्य किंवा परलोकस्य सुखस्य काचिदप्यपेक्षानास्ति यथा-कदाप्येतावताऽहं धर्मपरायणो भूत्वाऽनेकविध-व्रत-तपो-जप-ज्ञान-ध्यानादिकार्याणि करोमि तत्फलत्वेनाऽस्मिन् विश्वे, जना मह्यं बहुमानमर्पये-

शुर्मां प्रशंसेयुः, परभवे देवत्वेन किंवा नृपत्वेन भवेयं, ममेष्टजनानां सवन्धो भवेत्, किंवा मम विचारानुसारेणाऽनुकूल संयोगप्राप्तिः स्यात् तादृशी काचिदपि–वासना किंवा तृष्णा न स्यात् परमस्याः सर्वधर्मक्रियायाः ममात्मस्वरूपमेव प्रादुर्भूयादेतादृशोयस्याऽध्यवसायः स्यात्तथा यस्याऽऽहारविहारादिकार्याणि सात्त्विकत्वेनात्मोन्नत्यनुकूलत्वेन च स्युः स समभाववान् श्रमणो नवीनकर्माणि न बध्नाति, पुनरेतादृशो योगी क्रोधादिकषायान्निर्बलत्वेन करोति, स्त्री–देश–भोजन–राजकथा विजहाति, जयति च निद्रां, जीवनमरणयोर्द्वयोः प्रसङ्गयोः सादृश्यं मन्यते शत्रुमित्रयोश्च समानदृष्टिं धारयति, सुखदुःखयोश्च समानत्वं भासते पुनराहारादिगवेषणां कुर्वन्तु सत्स्वपि ये निरन्तरमात्मशुद्धिं विदधति, स्वशरीरसामर्थ्याऽगोपनेन च तपश्चर्यां कुर्वन्ति पुनरात्मशुद्ध्यर्थं देहमपि नापेक्षन्ते ते कर्मनिजरां विधायोज्ज्वलत्वमात्मानि विदधते। ये आहाराय संयममार्गोपयोग्युपकरणेभ्यो निवासस्थानाय च देश–काल–बल–परिश्रम लाभाऽलाभान् विचार्य्य वर्त्तन्ते तेभ्यः कर्मबन्धोऽल्पीयान् भवत्यर्थान्न भवति, यत्कार्य विधानेन संयमक्षतिर्भवेज्जनाविरोधिनश्च स्युः परिणामे च स्वस्मै क्लेशो भवेत्तादृशकार्यं प्रभुमार्गप्रवासिभिर्न विधातव्यम्।

## "आगमज्ञानम्"

यावत्प्रत्यक्षज्ञानं केवलज्ञानं न प्रादुर्भवेत् तावत्पदार्थनिश्चय आगमतः शास्त्रतो भवति, ततो मुनिभिरागमं प्रत्यादरभावो विधातव्यः, परलोकसंबन्धि च प्रभूततत्त्वान्तं ज्ञातुं प्रायः शास्त्रस्योपयोगित्वमस्ति ततो, लघुकर्मजीवानां तस्मिन् परमादरो भवेत्, द्रव्यमधिगन्तुं किंवा विषयतृप्त्यै जीवाः प्रायो विनोपदेशेनैव प्रवर्तन्ते, किन्तु धर्ममार्गप्रवृत्तिस्तु विनोपदेशं नैव विधीयते पुनरुपदेशोऽयं केवलज्ञानिनां परोक्षकाले तत्कथितशास्त्रेभ्य एव लभ्यते ततः, शास्त्रं प्रति पूज्यभावस्थापनं श्रेयस्करं स्यात्, यदि चाऽर्थकामयोर्जना न प्रवर्तेरन् तर्हि तेभ्योजनेभ्यो द्वयोस्तयोर्लाभो न भवेत् परंयदि धर्मे न प्रवर्त्तेरन् तदाऽर्थकामयोस्तु लाभो न स्यात्तत्तुवरं किन्तु, विशेषतोऽनर्थस्य

दुःखस्याऽपि प्राप्तिः स्यात्ततो धर्मार्थिजीवैः शास्त्राऽध्ययने पुनः श्रवणे चाऽहर्निशं प्रयत्नो विधातव्यः मोहस्वरूपेणाऽन्धकारभूतेऽस्मिन् विश्वे, शास्त्राणि प्रकाशकानि, मायारूपव्याध्युपशमे च शास्त्रमौषधतुल्यमात्मभानजागृतिकारकं च, द्रव्यस्याऽपि कारणं शास्त्रमस्ति पुनस्तच्छास्त्रं कलिकाले सर्वगतं चक्षुरस्ति, सर्वार्थसाधकं च, येषां जनानामिदं शास्त्रं प्रति भक्तिर्नास्ति तेषां निखिला धर्मक्रिया अन्धक्रियाया इव कर्मदोषेण कृत्वा निष्फला भवेत्, पुनर्यथा जलेन मलिनवस्त्राणां शुद्धिर्विधीयते तस्येव रागादिदोषतो मलिनीभूतमनसः शुद्धिः शास्त्रेण विधीयते, येषां च जनानां मतिः शास्त्रेऽतीवतीव्रा–सूक्ष्मवृत्तान्तविषयकारिका–श्रद्धालुश्च सामातिरवश्यमेव मोक्षस्त्रीसङ्गमे दूतिरिवाऽस्ति ततो, भवभिरुभिर्जीवैः शास्त्रंप्रति शोभनाऽध्यवसायो विधातव्यः, यथा च दुर्गमाऽटव्यां विस्मृतपान्थो गर्त्तप्रभृतितो दूरेस्थित्वा, स्वेप्सितस्थानमधिगन्तुं स्वयं समर्थो न स्यात्तद्वदस्यां भवाऽटव्यां विस्मृतजनोऽज्ञानरूपोन्मार्गमुल्लंघ्य शास्त्रज्ञानरूपसहाय्यं विना, मोक्षप्रयाणाऽर्हमार्गमधिगन्तुं न प्रभवति ।

## " परिणामसदृशंफलंप्राप्यते "

कूप्यां जलस्य मिष्टत्वाऽमिष्टत्वाऽनल्पत्वाऽल्पत्वप्रमाणेन तत्फले भिन्नत्वंस्यात्तद्वदनेकजनानां क्रियासु चैकसदृशत्वं दृश्येत तथापि, तत्परिणामप्रमाणेन फलानि शोभानाऽशोभनानि किंवाऽल्पाऽनल्पान्येवं विभिन्नानि भवन्ति, जनाः कर्मफलान्यनेकविधत्वेन भजन्ते तथापि, तत्फलभोक्तृणां जनानां बुद्धेर्ज्ञानसंमोहादिषु भेदवत्त्वेन किंवा रागद्वेषसमतादिषु तारतम्येन तत्फलेष्वपि तारतम्यमनुभूयते, निखिलजनानामभिप्रायाः "बुद्धि–ज्ञानाऽसंमोहरूपत्वेन" त्रिधा सन्ति तद्भेदेन च जनानां निखिलेषु कर्मसु भेदत्वं स्यात्, याचेन्द्रियाश्रिता सा " बुद्धिः " आगमाश्रितं च " ज्ञानं " पुनारत्मजागृतिमत्सदनुष्ठानसहितं ज्ञानं " असंमोहः " प्रोच्यते । ये जना इन्द्रियाश्रितबुद्धिपूर्वकाणि यावन्त्यनुष्ठानानि कुर्वन्ति तेषां विपाकविरसत्वेन

तानि कर्माणि संसारफलमर्पयान्ति, तान्येव च कर्माणि यदि ज्ञानपूर्वकत्वेन विधीयन्ते तर्हि कालान्तरे मोक्षहेतुरूपाणि भवन्ति, यतस्तेष्वनुष्ठानेषु श्रुतज्ञानसामर्थ्यमवतरति, ततस्तेषां भाविफलं सुखरूपमागच्छति, तृतीयं च यदसंमोहरूपकार्यं विधीयते तस्याऽतीवशुद्धत्वेन प्रभुमार्गमवासिभ्यस्तन्मोक्षसुखदायकत्वेन भवति । कर्मजन्यसुखदुःखादिभावेषु यस्य मनो रागद्वेषादि भावतो न परिणमेत् परं शान्तत्वेन भ्रान्तिरहितत्वेन च स्थातुं शक्नोति तादृशभाव–भोगेभ्यो विरक्तजीवा याथार्थ्येन मोक्षमार्गाऽधिकारिणः सन्ति, दशाभेदेन कृत्वा भिन्नभिन्नभूमिकासु भिन्नभिन्नाऽवस्थया भेदस्तु पतति तथापि, प्रत्येकं जीवं प्रति यथा सामान्यधर्म एकः स्यात्तद्वत्सम्यक्दृष्टिमत्सर्वजीवानां मार्गः सदैक एव भवेद्, दूरत्वनिकटत्वातिनिकटत्वभेदेषु सत्स्वपि ते, प्रभुमार्गस्य पथिका एव सन्ति, मोक्षस्यतु मार्ग एकस्तथापि केचिदुपशमभाववन्तस्तदा केचित् क्षयोपशमभाववन्तः सन्ति, पुनः केचित् क्षायिकभावमार्गे प्रयाणं कुर्वाणाः सन्ति दशयाऽनया भेदः प्रोच्यते तथापि साध्यस्यैकत्वेनैव सर्वेषां पर्यन्ते गतिस्त्वेकैव । निश्चयदृष्ट्या यदि विचार्यते तदा संसारादतीवभिन्नं “ निर्वाणनाम ” तत्त्वमस्ति तच्छब्दभेदेन पृथग् भासते परं वस्तुतया त्वेकमेव, केचित्तद् “ मुक्त–निवृत्ति–सिद्ध–परब्रह्माऽभव–शिव ” प्रभृति शब्दैः संबोधयन्ति तथापि, निखिला एते शब्दाः समानार्थवाचकाः सन्ति ततस्तेषु तात्त्विकभेदो नास्ति, मोक्षलक्षणे कस्याऽपि प्रकारस्य विसंवादो नास्ति तर्हि पश्चात्तं कश्चिन्निराबाधं कथयेत् पुनस्तं कश्चित् कर्मरहितं वदेत् तथैव तस्मिन् नास्ति जन्ममरणत्वं ततः कश्चित्तं कार्यकारणपरं गदेत्तास्मिन्नास्ति कोऽपि विरोधः, भ्रान्तिराहितत्वेन, निश्चयदृष्ट्या निर्वाणतत्त्वस्य ज्ञानाऽनन्तरं तमाख्यन्तु केनापि नाम्ना परं तदर्थं मुमुक्षुजीवानां विवादकारणं किमपिन, मुक्तिमार्गः सर्वज्ञैर्दृष्टः पुनः ससरलो नचतास्मिन् भेदः पतति तथापि यथावैद्यो व्याध्यनुसारेणौषधं ददाति तद्वदाचार्या अपि योग्यताऽनुसारेण विविधोपदेशमर्पयन्ति कर्मव्याधिंच दूरीकुर्वन्ति, पुनरत्र चारित्रस्य यद्वर्णनमभिहितं

तद्व्यवहारदृष्ट्या मोक्षकारणं परं परमार्थदृष्ट्या निश्चयदृष्ट्यातु शुद्धात्मनो ध्यानकरणं तदेव मोक्षमार्गः, व्यवहारचारित्रं कारणरूपमस्ति ततोनिश्चयचारित्ररूपकार्यमुत्पादयितव्यमस्ति, व्यवहारचारित्रं तद्योग्यतायां विशेषत्वमुत्पाद्य, तत्साध्यंप्रति नयति। "व्यवहारमार्गस्तु द्वेधा," मोक्षाऽनुकूल एको द्वितीयस्तु 'संसाराऽनुकूलः, मोक्षानुकूलव्यवहारमार्ग स्त्वात्मजागृतिपूर्वक–जिनेश्वरकथितचारित्रमार्गः, संसाराऽनुकूलव्यवहारमार्गस्तु, आत्मदृष्टिरहिताऽसम्यक्चारित्रप्रवृत्तिकरणं तदस्ति। सम्यक्चारित्राऽऽचरणेन कषायानामिन्द्रियाणां च जयो भवेत्, कषायेन्द्रियाणां जयतश्च स्वाध्यायवृद्धिः स्यात्, स्वाध्यायकरणतोध्यानं प्रादुर्भवति, ध्यानमन्ते मोक्षं प्रापयति। आत्मजागृतिपूर्वकत्वेन चारित्रस्याऽस्याऽराधनतः शुभध्यानस्य यानियानि विरोधितत्त्वानि सन्ति तेषां निरोधो भवेद्, ध्यानेनाऽनेन विनाऽनन्तशक्तियुक्तशुध्धात्मानमधिगन्तुं नकोऽपि जीवः शक्तिमान् संजातः, ये बुध्धिमन्तो जीवा लोकप्रवाहाऽपेक्षारहितत्वेन राग–द्वेष–प्रपञ्च–भ्रम–मद–काम–क्रोध–लोभादिरहितपवित्रचारित्रमाचरन्ति, नित्याऽनुभवगम्यकर्ममलरहितात्मनः शुध्धस्वभावध्यानं च कुर्वन्ति ते, कर्मरिपुसमूहं विनाश्य, परमसुखमय निर्भयसिद्धिरूपप्रासादेच प्रविश्य, सदाऽऽनन्दमयो भूत्वा च तिष्ठति।

इतिश्रीतपगच्छीयगच्छाधिपतिश्रीमन्मुक्तिविजयगणिनां–शिष्यश्रीमदाचार्यश्रीविजयकमलसूरीश्वराणांमुख्यपट्टधर-शिष्य श्रीमदाचार्यश्रीविजयकेशरसूरीश्वरेण विरचिते श्रीमहावीरतत्त्वप्रकाशाभिधानके ग्रन्थे चारित्राधिकारः संपूर्णः ॥

## "प्रकरणं नवमं"

### "सर्वतत्त्वरहस्यं"

मुक्तात्मा ज्ञानदर्शनस्वभाववान् सदाऽऽनन्दमयश्च, मुक्ताऽवस्थायां न विनश्यति चैतन्यस्वभावत्वं, यदिच चैतन्य

स्वभावस्य नाश एव " मुक्तिः " मन्येमहि वयं, तर्हि मुक्तात्मन एव नाशो भविष्यति, गुणगुणिनोश्चाऽभेदसंबंधत्वेन गुणनाशे गुणिन एव नाशो भाविष्यति, यतो गुणवान् गुणतः पृथक् नास्ति, कश्चिच्च चैतन्यमात्मनः कर्मजन्यविभावगुणत्वेन वदति किन्तु तथान, चैतन्यस्य कर्मस्वभावगुणत्वकथनं किंवा विभावगुणत्वकथनं स एष विचार एव युक्तियुक्तो नास्ति, ज्ञानगुणस्य जीवस्व भावत्वं यदि न मन्यामहे वयं किन्तु वैभाविकगुणत्वं मन्यामहे तर्हि ते ज्ञानगुणः कर्मणः स्वाभाविकगुणः किंवा वैभाविकगुणोऽस्ति ? ज्ञानं यदि कर्मणः स्वाभाविकगुणः स्वीक्रियेत तर्हि कर्मणश्चैतन्यरूपाऽऽपत्तिः सेत्स्यति तत्तु नार्हं, यदि च ज्ञानस्य कर्मविभावगुणत्वं कथयिष्यन्ति तर्हि तस्य ज्ञानस्य कस्य स्वभावगुणत्वं भवन्तो मन्येरन् ? यद्यात्मनः स्वभावगुणो ज्ञानं स्यात्तु कथयामो वय, यदिच चैतन्यं कर्मजन्यविभावपर्यायत्वं मन्यन्तां तर्हि कर्मणि ज्ञानत्वमपि स्वीकर्त्तव्यं स्याद्यतः कारणसदृशं कार्यं भवेद् , ज्ञानं प्रकृतिधर्मो न, यदि च ज्ञानं प्रकृतिधर्मत्वेनाङ्गीकुर्युस्तर्हि तस्मिन् स्वीकर्त्तव्यं स्याच्चैतन्यं, यतो ज्ञानं चैतन्य स्वरूपमस्ति, यदि च प्रकृते श्चैतन्यं स्वीकुर्युस्तर्हि कर्मात्मनो नकोऽपि भेदो संभविष्यति, पुनरनिच्छया प्रकृतेरात्मत्वं स्वीकर्त्तव्यं स्यात् , ततश्चैतन्यं ज्ञानरूपात्मनः स्वभाव, एतत्स्वीकरणं यथाऽर्हं, न शक्नोति तद् विभावपर्यायत्वेन भवितुं ।

## " नास्ति मोक्ष आत्मनोऽभावः "

"मोक्षः" " आत्मनो अभाव " एवं ये कथयन्ति नैषा वार्त्ता मन्तव्या, यतो यस्य पदार्थस्याखण्डविद्यमानत्वं भवेत्तस्याऽभावकथनमयोग्यं, यथा च निर्मलचन्द्रे स्थिता कान्तिरपि सदा निर्मला भवेत्तथापि तत्स्वभावे या विकृतिर्दृश्यते सा मेघावरणेनोत्पन्नाऽस्ति, तस्यैव निर्मलात्मनि निर्मलज्ञानं सदा स्थितमस्ति तथापि, तत्स्वभावे या विकृतिर्निरीक्ष्यते साऽष्टकर्मावरण विनिर्मिताऽस्ति, मेघानामपगमत्वेन यथा चन्द्रे तत्कान्तिः प्रादुर्भूता दृश्यते तथैव कर्माऽपगमत्वेनात्मनि शुद्धज्ञानं विकासते,

यथा च प्रचण्डवायवः सूर्यावरणभूतमेघान् पृथक् कुर्वन्ति तद्वद्योगी शुद्धात्मध्यानतः स्वल्पसमयेन कर्मावरणानि पृथक् करोति। येन योगेन शुद्धात्मनो ज्ञानं भवेत् सएव योगिभिर्योगोऽभिधीयते, तस्माच्च योगात् समुत्पद्यमानं सुखं तत्सर्वोत्तममस्ति, नास्ति च तस्मिन् कामवासनापीडा किन्तु समभावभृतत्व स्यात् स्थैर्यं वा स्यात्, तच्च सुखमात्माभ्यन्तरे स्यात्तच्च जन्ममरण वृद्धाऽवस्थाविनाशकं, यावत्पराधीनत्वमेतावत्समग्रं दुःखं यावच्च स्वाधीनत्वमेतावत्सुखमस्ति, संक्षेपतः सुखदुखःयोरिदं लक्षणम भिहितं, ज्ञातव्यमस्मादेतद् यत् पुण्यतः समुत्पन्ना भोगाः पुण्याधीनत्वेन परवशत्वाद् दुःखरूपाः, किन्तु योगोद्भूतज्ञानमात्म-स्वरूपं, ततश्च स्वाधीनत्वेन सुखरूपं स्यात्, यथा च मलेन पृथग्भूतं सुवर्णं शुद्धसुवर्णमभिधीयते, तद्वत्कर्ममलपृथक्त्वे भवति चात्मा शुद्धः, संध्यासमये, आकाशे गन्धर्वनगरसदृशाकारप्राप्तमेघानामिव क्षणविनाशिनोऽवास्तविकभोगान् मुग्धमति मन्तोऽज्ञानिजीवा वास्तविकत्वेन स्थिरत्वेन च जानन्ति

## " संसारस्वरूपं प्रोच्यते "

चित्तविभ्रमोत्पादकोऽयं संसारः पुनस्तीव्ररागद्वेषाद्युत्पत्तिकारणं महद्व्याधिभृतश्च, विविधजन्ममरणादिविक्रियाणामुत्पादकोऽनादिः कर्महेतुश्च, तेषुचैकेन्द्रियादिविविधपर्यायान्धारयित्वा जीवोऽयं परिभ्रमन्नास्ते। जन्मदायकानां सर्वविकाराणामभावे भवत्यात्मा मुक्त स्तदनन्तरं न च बध्यते पुनः सिद्धावस्थालाभस्याऽनन्तरं पुनरसिद्धो न भवेद्, ज्ञानमयोभूत्वा पुनरज्ञानमयो न भवति, यथा पाचनाऽनन्तरं बीजस्य पुनः प्ररोहणसामर्थ्यं विनश्येत्तद्वत्कर्मतो मुक्तेरनन्तरं पुनर्भवस्य प्राप्तिः नस्यात्पश्चात्तु स्वस्वरूपे लीनत्वमेव स्यात्। अन्यकार्यप्रवृत्तिविधानत्वे सत्यपि, यस्य मनः शुद्धज्ञाने सदा लीनं भवेत्तादृशजनाय सक्त्यभावेन भोगाः संसारकारणरूपा न स्युः। यथाबुद्धिमज्जना मृगतृष्णाजलमसत्यत्वेन मन्यन्ते पुनस्तंप्रति जलं मत्वा तदानयनाय

न प्रवर्त्तन्ते, तथैव वस्तुत्वेन ये, संसारस्याऽस्य भोगान् मायासदृशत्वेन जानन्ति, ते तेषु भोगेषु निवसन्तोपि तैर्नलिप्यन्ते, तात्त्विकदृष्ट्यातु ये भोगानां तथ्यस्वरूपं पश्यन्ति ते भवसागरे न प्रत्यागच्छन्ति, यं प्रति यस्याऽभावो जायते तं प्रति ते, न प्रवर्त्तन्ते, मृगतृष्णाजलस्य यथार्थतया वेदकः किं तत्प्रति प्रवृत्तिं विधास्यति ? नैव, किन्तु यो जनो मृगतृष्णाजले "जलमस्ति किंवाऽन्यदस्ति तथाभूतशङ्कायुक्तोभूत्वा, यद्यहं तत्प्रति जलमानेतुं गमिष्यामि किन्तु यदि तन्नलप्स्ये तर्हि व्यर्थगमनं भविष्यति, किंवा तत्सत्यमेव जलं स्यात् पुनरहं तत्प्रति न गच्छेयं तर्हि विनाजलेन तिष्ठेयमेवं संशययुक्तभयोद्विग्नः सन् तत्रैव तिष्ठति तद्वन्निर्वाण मार्गेऽपि भयोद्विग्नजीवः, मोक्षे तात्त्विकसुखं भविष्यति किंवा न, तादृशशङ्कया न प्रवर्त्तते, किंवा तत्र मोक्षे तात्त्विकसुखं यदिस्याचर्हि तद्विनाऽहं तिष्ठेयं,किंवा तत्र शान्तिर्नभवेत् तदा वर्त्तमानकाले प्राप्तभोगान्विहाय पर्यन्ते दुःखीभविष्याम्यहमेवं सशयात्मकोभूत्वा, पर्यन्ते भोगमायायां प्रसुप्त नाऽग्रे वर्द्धितुं प्रभवति ।

## " पुण्यमपि संसारे भ्रामयति "

चन्दनोद्भूतोऽग्निरपि किं वस्तु न दहति ? वस्तुतो दहत्येव, तथैव पुण्यतोऽपि प्राप्तभोगा दुःखपरंपरामेव ददते, विपत्तेश्च सखीसदृशीयं लक्ष्मीर्विद्वद्भ्य आनन्ददायिका न भवति, तथैव पापमित्रसदृशा इमे भोगा अपि जनेभ्यः श्रेयोविधायिनः किंवा सुखदायिनो न भवन्ति,सम्यक्ज्ञानरूपदीपकस्य प्रकाशेन, भोगानां निर्गुणत्वं नीरसत्वं वा यदाजनैर्दृश्येत किंवाऽनुभूयेत तदा, जीवाय पारमार्थिकत्वेन भोगात् ससाराच्च वैराग्यं प्रादुर्भवेत्, पुनरनेकदुःखानां वीजस्येव, मिथ्याज्ञानविनाशानन्तरं च मोक्षस्य परमगुणानां ज्ञाने सति,मोक्षं प्रति परमभक्तिभावो—जीवाय प्रादुर्भवति ततोवाह्यवस्तुत्यागं चिकीर्षुणा जीवेनादौ तात्त्विक रीत्या मिथ्यात्वस्याऽस्य सर्वथा त्यागोविधातव्यः। यथा रविरन्धकारेण न लिप्यते,लोहकवचधारको यथावाणेन न विध्यते तद्वन्नि-

र्मलज्ञानमपि विषयैर्न विध्यते न विनश्यति, ज्ञानेनोत्तमप्रवृत्तिं विधातुं शक्यते, तथैव तेन मोहरूपाऽन्धकारो निवर्तितुं शक्यः, पुरुषार्थे प्रेरकं तच्च तथैव मोक्षस्य सत्यसाधनमपि ज्ञानमस्ति, पुनरनेकचिन्तातोनिराशीभूतैर्जीवैस्तत्तत्त्वं चिन्तनीयं, यस्य चिन्तनतो विकारा अपि निर्विकारत्वं भजेयुः पुनरज्ञानं ज्ञानतां भजेद्, निराबाध–निराकुलतामय–सुखस्वरूपात्मनि यन्निर्मलज्योतिर्मयं तदेव तत्त्वं परमोत्कृष्टमस्ति, तद्राहितमवशिष्टं यत्किञ्चिदस्मिन्विश्वे तत्त्वं स्यात्तत्त्वं न किन्तु तन्निर्मलतत्त्वाय परमोपद्रवविधायकानि कारणानि सन्ति, मोक्षाऽभिलाषिजीवैश्चात्मतत्त्वं विनाऽन्यस्मिन् कस्मिन्नपि तत्त्वे आग्रहो न कर्त्तव्यः यतः सर्वत आसक्तेराकर्षणाऽनन्तरमेव निर्वाणं साधयितुं शक्यः पुनरतीवाऽग्रे वर्द्धनाऽन्तरंतु, कर्त्ताऽस्म्यहं, मोक्षःकार्यं, ज्ञानं हेतुः, सुखमेतत् फलमेतादृश एकोऽपिविकल्पः कल्पनातीतमोक्षाय कर्त्तव्यो न स्यात् । यथाऽऽकाशस्थितपुद्गला आकाशत्वं न लभन्ते, तद्वदात्मनि स्थिताःकर्मवर्गणा आत्मत्वं न लभन्ते, यथा भानोः समीपे तथा सर्वत आगता मेघा भानुत्वं न लभन्ते, तद्वत्पृथ्वी–जलाऽग्नि–वायु–वनस्पतिरूपस्थावरनामकर्मविकारा येचात्मनः परिपार्श्वत आगताः सन्ति ते न भवन्त्यात्मरूपाः पुष्पोपाधित उद्भूता निर्मल श्वेतस्फटिकस्य रक्त–पीतश्यामादिविकारा मन्यन्ते किन्तु तात्त्विकतयातु ते विकाराः स्फटिकस्य न सन्ति, तस्येव जीवस्य कर्मोपाधित उद्भूता रागद्वेषादिपरिणामाः सन्ति, किन्तु तात्त्विकतयातु ते परिणामा जीवस्य न, यथा च मृत्पिण्डेन कुंभ–सरावादिपदार्था उत्पद्यन्ते तद्वन्निखिलकषायादिपरिणामाश्चेतनानिमित्तत्वेन कर्मभिरुत्पद्यन्ते यथा च घटोत्पत्तौ "मृत्तिका" मूलकारणमुपादानकारणमस्ति पुनःकुंभकार–चक्रदण्ड–रज्ज्वादीनि वस्तूनि निमित्तकारणानि सन्ति, तद्वदात्मनि क्रोधाद्युत्पत्तिः स्वीकार्यते, तस्मिन्नुपादानकारणं तु कर्म, चेतना किंवाऽऽत्मा निमित्तकारणं स्यात्ततः क्रोधादयो न भवन्ति जीवकार्याणि किन्तु कर्मजन्यकार्याणि स्युः

## " कषायस्वरूपं प्रोच्यते "

यथा च जले कल्लोलास्तरङ्गाः समुत्पद्यन्ते तद्वत् कर्मोदयेनात्मनि यन्मलिनपरिणामत्वं भवेत्तत "कपायस्वरूपत्वं" प्रादुर्भवेद् बीजांऽकुरयोरिवैकविनाशे द्वितीयविनाशो भवति यथा च सुवर्णमलस्य दूरत्वं भवेत्तथातथोत्तरोत्तरं तस्य शुद्धत्वं प्रादुर्भवेत् तस्यैव परिणामिजीवादस्माद्यथा यथा मलिनत्वाऽभावो भवेत्तथा तथा तत्परिणामा उत्तरोत्तरं शुद्धा भवेयुः, यथा संपूर्णमलस्य-दूरत्वेन सुवर्णं शुद्धं भवति तद्वत्कर्ममलिनत्वस्य सर्वथा दूरत्वे सति सर्वथाऽऽत्मा शुद्धोभवति, यथा वायुं विना समुद्रो विनातरङ्गत्वं भजते तस्यैव कर्मकर्ममलिनत्वाऽभावेनाऽऽत्मा निश्चलत्वं निर्विकारत्वं च लभते । इन्द्रियजन्यविषयरहितं यज्ज्ञानमभ्यन्तरे प्रतिभासते तत्सम्यक्ज्ञानमात्मस्वरूपमस्ति ज्ञानिभिस्तदनुभवितुं ज्ञातु च शक्यं, ये च तदतीन्द्रियज्ञानं ज्ञातुमनुभवितुं च शक्नुवन्ति तएव ज्ञानिनः प्रोच्यन्ते,यत्प्रकाशाऽभाव अस्मिन् विश्वे निखिलमन्धकारमयं भासते यद्विद्यमानत्वे च निखिलंप्रकाशमयमनुभूयते तत्परमात्मनः शुद्धात्मनोज्योतिः स्वरूपमस्ति ज्योतिःस्वरूपमिदमन्धकार–प्रकाशयोर्द्वयोर्ज्ञानं विधातुं सामर्थ्यवदस्ति । स्वभावत एवाऽखिलपदार्थाः स्वस्वरूपे स्थिताः सन्ति न च कदाप्यन्यथा कर्त्तुं पार्यन्ते, पुनराकाशस्येवात्मा " निर्मलऽमूर्त्तोविनाशित्वेन स्थितोऽस्ति संयोगसंबन्धत्वेनागत्य मिलितानि परद्रव्याणि तत्स्वरूपं स्वस्वरूपत्वेन किंवाऽन्यथारूपत्वेन कर्तुं न समर्था भवन्ति, देहात्मनोः सदा भेद एव यतस्तौ द्वौ भिन्नज्ञानेन ज्ञातुं शक्येते भिन्नज्ञानात्माप्तुं च शक्येते, इन्द्रियोद्भूतज्ञानतो देहोऽवगन्तुं शक्यते स्वानुभाववता ज्ञानेन चात्मा ज्ञातुं शक्यते । नास्ति जीवकर्मणोः परस्परं वध्यघातकसंबन्धः, एको वध्यो द्वितीयो घातक एतादृश सवन्धोवध्यघातकः सवन्धो ब्रूयते, नास्त्येतादृशसंबन्धो जीवकर्मणोः किन्तु संयोगसंबन्धोऽस्ति तत एव द्वयो जीवकर्मणोः पृथक्त्वं भवितुं शक्यते किन्तु परस्परगुणान् न नाशयतोर्थात्कर्माणि जीवगुणान् न नाशयन्ति जीवश्च कर्मगुणान्

न नाशयति किन्तु परस्परमेकरसीभूय सह मिलितास्तिष्ठन्ति जीवकर्मणोश्च परिणामा वोभूयन्ते तेषु च परिणामेषु यदा परस्पर निमित्तत्वं न भवेत्तदा परस्परेण संवद्धानां जीवपुद्गलानां विभिन्नत्वं स्यात् तदेव विभिन्नत्वं मोक्षइति प्रोच्यते। पुद्गलानां ज्ञाना-वरण-दर्शनावरणादिपरिणामभवनेचात्मन्युत्पद्यमाना रागद्वेषादिपरिणामानिमित्तकारणानि सन्ति, पुनरात्मन्युत्पद्यमान रागद्वेषादिपरिणामेषु ज्ञानावरणादिपरिणामा निमित्तकारणरूपाः सन्ति यदा च पुद्गलानामात्मपरिणामेषु कारणत्वं न स्यादात्मा च पुद्गलपरिणामेषु कारणस्वरूपो न स्यात्तदाऽऽत्मकर्मणोर्विभिन्नत्वं भवेत् ।

"आत्मानमात्माकारेण परिणामयन्तु"

स्फटिकमणेरिवात्मा येन येन भावेन सह संबध्नाति तत्र तत्र तेन तेन भावेन तन्मयत्वं लभते, स्फटिकमणिसन्निधौ रक्त-पीतं किंवा श्यामं यादृशं यादृशं पुष्पं स्थापितं स्यात्तादृशोमणिर्दृश्यते तद्वदात्मसन्निधौ यानि यानि शुभाऽशुभनिमित्तानि स्थापितानिस्यु स्तादृशतादृशपरिणामेनात्मा परिणमति, निमित्तानिचेमानि द्वेधा यथैकं वाह्यनिमित्तं द्वितीयंत्वन्तरङ्गनिमित्तं च, वाह्यनिमित्तरूपेण पञ्चेन्द्रियाणां शुभाऽशुभविषयाः सन्ति यथार्थवैराग्यजागृतिं विना निनित्तानीमानि च निरीक्ष्य जीवो विधत्ते शुभाऽशुभपरिणामान्, शुभाऽशुभपरिणामाश्चोत्तरोत्तरमन्यपरिणामान्नुत्पादयन्ति, शुभपरिणामो भवति च रागस्य-कारणं, रागश्च पुण्यकारणं भवेत् । अशुभपरिणामो राग-द्वेषमोहाज्ञानानां पापस्य च कारणं स्यादत एव यावद्विश्वस्य निखिल पदार्थेभ्यो ज्ञानगर्भितवैराग्यमात्मजागृतिबलेन नोत्पद्येत तावद् ज्ञानिनस्तादृशनिमित्तेभ्यो दूरं निवसितुं वारंवारं प्रेरयन्ति यतः सत्तापतितवीजानि यावद्दूरं न भवेयुस्तावद् वाह्यनिमित्तानि तं तत्मार्गतश्चलितं विनाविधाय न तिष्ठन्ति, द्वितीयोभ्यन्तरनिमित्त मेतावता सत्तास्थितकर्माण्युदयं प्राप्य निमित्तकारणरूपाणि भवन्ति तेभ्यश्च-राग-द्वेष-मोहाऽज्ञान-पुण्यपापाद्यनेकभावानां

वृद्धिः किंवा हानिर्भवेद्, वाह्यशुभनिमित्तेभ्यः कियद्भ्यो वैराग्यं जागर्ति पुनरात्मभानं प्रादुर्भवति शुभं किंवा शुद्धं कर्त्तव्यंप्रति प्रवर्त्तनप्रोत्साहो लभ्यते, तथैवाऽन्तर्गतशोभनकर्मणामुदये ज्ञान–ध्यान–वैराग्यात्मजागृतिं किंवोत्तमोत्तमशुभप्रवृत्तिं वा शुद्धप्रवृत्तिं प्रति प्रयाणविधानोत्साहः प्रादुर्भवेत्, अस्मादेपनिश्चयो भवेद्यदात्मनः परिणामः शुभः स्यात्तर्हि शुभरूपेण परिणत इति प्रोच्यते यदिचात्मनोऽशुभपरिणामो भवेत्तर्ह्यात्माऽशुभरूपेण परिणतः प्रोच्यते, ततो विद्वद्भिः स्वात्मा चात्मभावनायां वारंवारं नियोक्तव्यस्ततश्चात्मा शुभाऽशुभभावतो निवृत्यचात्माकारेण परिणम्य स्थास्यति, किंवाऽऽत्मानं शुद्धस्वरूप एव परिणामनेन परपदार्थं प्रति परिणमनतो निवृत्य स शुद्धो भविष्यति यद्येकवारमात्मा सर्वथा कर्मतो विभिन्नो भवेत्तर्हि पश्चात्पुनः स कर्मणा सह कदापि न संयुज्येत, शुभाऽशुभपरिणामाविधाने बीजरूपकर्मणामभावे संसार पतन परिणामा नोत्पत्स्यन्ते, पक्व-बीजतो नाङ्कुराः प्रादुर्भवन्ति तथैव कर्मबीजस्य दहनाऽनन्तरं कर्माणि नोद्भवन्ति ।

## " उपादानकारणं "

यथा दण्ड–चक्र–कुम्भकारादिसंभारविद्यमानत्वेऽपि विना मूलकारणमृत्तिकां घटो नोत्पद्यते तद्वन्मनो–वचन–शरीर क्रियारूपसंभारविद्यमानतायामपि तदुपादानकारणं विना कर्माणि नोत्पद्यन्ते–यथा घटोत्पत्तौ मृत्तिकाया उपादानकारणत्वं तद्वत्कर्मण उपादानकारणं रागद्वेषमलिनत्वमस्ति तद्विद्यमानतायामेव कर्मोत्पत्तिः स्यात् । यथा कुम्भकारः सहकारिकारणत्वेन घटं रचयति तथापि कदापि केनाऽपि प्रकारेण कुम्भकारो घटरूपो नस्यात्तद्वदात्माऽपि सहकारिकारणत्वेन कषायादीन् करोति तथापि कदापि कषायादिरूपेण न स्यात् । यः कर्म कर्मत्वेन जानात्यकर्मचाऽकर्मरूपेण जानाति स सर्वविधकर्माणि कुर्वन् सन् पर्यन्ते कर्माणि नाशयति, यस्य च सत्यस्वरूपज्ञानं स्यात्स कस्मिन्विकटप्रसङ्गे हेयवस्तूनि स्वीकुर्यादपि तथापि स्वल्पसमयेन

तत्त्यागो विधातुं शक्योयतश्च तस्य सत्याऽसत्यज्ञानं वर्तते, यस्य च सत्यज्ञानमेव न, स तत् स्वीकरोति हितकारित्वेन, पुनरहित कारित्वे सत्यपि तादृक्ज्ञानाऽभावेन प्रसङ्गे तत्त्यक्तुं न प्रभवति । यथा पङ्कपतितनिर्मलस्फटिकोऽभ्यन्तरे पङ्केन न लिप्यते पङ्क स्वरूपेण न परिणमति तस्यैव यस्य जनस्य विषयेषु ममत्वं न स्यात् स विशुद्धात्मा विषयरूपपङ्केन न लिप्यते, कस्मिन्नपिकार्य आसक्तिविद्यमानत्वं तदेव कर्मबन्धस्य कारणं स्यात्, तदविद्यमानत्वं च, कस्मिन्विषमप्रसङ्गे तादृशजनानां विषयान् प्रति प्रवृत्तिर्दृश्यते तर्ह्यभ्यन्तरत्वेन सत्यत्वेन क्रियमाणाया अभावात्सजीवस्तस्यां प्रवृत्तौ न लिप्यते कर्मणाऽर्थाद्यथारत्नं पङ्कपतित्वेनो- परिष्टादशुद्धंभवेत्किन्तु स्वल्पजलेनाऽनन्तरमेव विशुद्धं भवेत्, येन तत्त्वदृष्ट्या देहात्मनो भेदोज्ञातो यथार्थतया, तस्य विषयेषु कदाप्यासक्तिर्न स्यात् । शुभाऽशुभाऽशुद्धत्वेन जीवस्य त्रिविधभावा भवन्ति तेचाऽनुक्रमेण जीवाय पुण्य–पाप–मोक्षानां कारणरूपाः स्युः भगवदर्चनं, पूजन, दान–व्रत–तप–जप स्वाध्यायादिभावास्ते जीवस्य शुभभावाः सन्ति ततश्च पुण्यं बध्यते, हिंसाऽसत्य– चौर्य–मैथुन–परिग्रह –क्रोधाऽभिमान–कपट–लोभ–राग–स्नेह–द्वेष–क्लेश–युद्धाऽभ्याख्यान–पैशुन्य–हर्ष–शोक–निन्दा–कपटस- हिताऽसत्यकथनत्वमसत्ये सत्यभ्रान्तित्वं सत्येऽसत्यभ्रान्तित्वमिदं निखिलं शुभेतरभावत्वमात्मनस्ततश्च पापंबध्यते, कर्ममलरहित शुद्धात्मनो विचारकरणं ध्यानकरणं तदाकारत्वेन तस्मिन्निवसनं तदात्मनः शुद्धभावो मोक्षकारणंच । पुण्यता लभ्यते–देव–नृप– चक्रवर्त्यादिसमृद्धिः, पापेन–पशु–पक्षि–वृक्ष–नरकादीनां गतिः प्राप्यते तद् दुःखान्यपि च भोक्तव्यानि स्युः, शुद्धात्मनो ध्यानेन च मोक्षो लभ्यते, भवति चाऽस्मादयं निश्चयो यच्छुभाऽशुभौ द्वौ भावौ विहाय शुद्धभावश्च स्वीकर्त्तव्यस्ततश्च कर्मागमनं निरुध्यते पूर्वबद्धकर्माणि च क्षयन्ति पर्यन्त आत्मा सदैव विशुद्धो भवेत् ।

"केन प्रकारेण शुद्धभावः कर्त्तव्यः"

आत्मनि शुद्धभावमानेतुमिच्छभिर्जीवैरादौ स्वमनः, पञ्चेन्द्रियविषयेभ्य आकृष्य तन्मन आत्मनिनिश्चलं कर्त्तव्यं तत्पश्चात्तन्मनो न किञ्चिच्चिन्तयेत्तत्प्रति ग्रहव्यं, दीर्घसमयाऽभ्यासेन मन आत्मनि लीनं भवेदितश्चात्मनो शान्तत्व-शुद्धत्वभावत्वमपि द्रढंस्यान्मनसश्च निर्विकल्पत्वं स्यात्तदनन्तरमात्मा स्वस्वभावे स्थिरोभवति, निर्विकल्प-स्वरूपस्थाऽवस्थायां पूर्वबद्धानां सत्तास्थितानां कर्मणां क्षयः कर्तुं शक्य एवं चात्मनः शुद्धभावः प्रादुष्कर्तुं शक्यते। येन स्वात्मा परमार्थमार्गतो विमुखीकृतः स्व शक्त्या च दार्ढ्येन विषयस्मरणं विधातुमारब्धं सजनोयावदेतादृशंप्रवृत्त्यारम्भं सततं प्रवाहयति तावत्सदादीनो दुःखी च भवेत्तथैव वर्तमानभाविभवौ स्वहस्तेनैव विरूपयति। एकजनो भोगान् न भुङ्क्ते तथापि भोगानधिगन्तुं प्रयत्नं कुर्वाण आस्ते, द्वितीयश्च भोगान् भुङ्क्ते तथापि तान् विहातुं प्रयतते, भोगान्तरायकर्मण उदयेन जीवेन स्वेच्छाऽनुसारेण न प्राप्यन्ते भोगास्तथापि तान् भोक्तुं तस्मिन् तीव्रेच्छाविद्यमानत्वेन स तदर्थं सततं प्रयतते, द्वितीयश्च विशुद्धिमान् जागृतात्मा-ज्ञानीचास्ति तस्मै च पूर्वशुभकर्मोदयेनोत्तमोत्तमभोगप्राप्तिर्जाता पुनस्तेषामुपभोगमपि विधत्ते तथापि तस्य ज्ञानित्वेन भोगानां दुःखदायिपरिणामं जानीते ततस्तत्त्यागभावनाऽहर्निशं तस्य मनसि तिष्ठति पुनस्तत्त्यागार्थं प्रयत्नमपि करोति, पूर्वबद्धभोगावलिकर्मणां विना भुक्त्या विमोक्षो नस्यादेतावता तानि कर्माणि भोगानन्तरं न्यूनीकरोति, द्वितीयोऽयं जनो भोगान् भुक्त्वा भोगान् विजहाति तदा प्रथमपुरुषो न भुङ्क्ते भोगान् तथापि तदर्थं नवीनकर्माणि बध्नाति, द्वयोरनयोर्दृष्टान्तयो ग्रहणत्यागयोराधिक्यं प्रत्यक्षतया दृश्यते तत्कृत्वा नैकोऽत्र बध्यते तत्र द्वितीयो विमुच्यते, एकजनो न जानीयात्परमार्थमार्गं तथापि तद्विषयानां स्मरणं किंचेच्छां न विदध्यात्, यदा यद्वस्तु लभेत तदा तस्मिन् संतुष्यति स जीवोऽस्मिन् भवे तथैव परभवे निरन्तरं सुखीभवेत् तस्यैतत्कारणं यद्विषयेभ्यो

विरक्तत्वकरणमेतदात्मकाध्यवसायेष्वेव कोऽपि स्थितोऽपूर्वचमत्कारो येन परमार्थं प्रति प्रवृत्तेरविद्यमानत्वे सत्यपि, विषयसंबंन्धि विरक्तत्वपरिणामास्तस्मै परमार्थमार्गं प्रति प्रवृत्तिविधायकस्येव भाविफलमर्पयन्ति, एको रागिजनो भोगान् न भुङ्क्ते तथापि कर्माभिः प्रचुरीत्या बध्यते, द्वितीयश्च विरागिजनः पूर्वपुण्यैर्लब्धभोगान् भुङ्क्ते तथापि कर्मभिर्नबध्यते स्थलेचाऽस्मिन् कर्मबन्धे रागस्यैव प्राधान्यं कर्म विमोचनेच विरागस्यैव मुख्यत्वं वर्तते । पञ्चविधविषयाणां ज्ञानेन ज्ञानिजनो न बध्यते यदि च ज्ञानमात्रेणैव कर्मबन्धो भवेत्तर्हि केवलज्ञानी स्वशक्त्या त्रिलोकीं जानाति ततस्ते कर्मभिर्बध्येरन् किन्तु न बध्यन्ते यस्मिन् ज्ञानमस्ति परं रागाऽभावः स्यात् स कदापि न बध्यते, यस्मिन् रागस्य तुविद्यमानता स्यात् किन्तु ज्ञानाऽभावो भवेत्सत्रबध्यते, कर्मबन्धनेचात्र रागस्यैव मुख्यत्वमज्ञानिजीवा इन्द्रियविषयान् न गृहणीयुस्तथापि कर्मभिर्बध्यन्ते, न बहुत्वेनैकेन्द्रियजीवा विषयान् गृहणन्ति तथापि किं कर्मभिस्ते न बध्यन्ते ? प्रत्युत बध्यन्त एव, ततश्चात्र कर्मबन्धनेऽज्ञानस्य तथा मिथ्यात्वस्यैव प्राधान्यं समस्ति ।

ये च रागद्वेषतोनिवृत्ताः सन्ति तेषां प्रत्याख्यानादिविधानं निरर्थकं स्याद्, ये च रागद्वेषयोः प्रवर्त्तन्ते तेषामपि प्रत्याख्यानादिविधानं निष्फलमस्ति । व्रत–तपो–जप ज्ञानादिविधानं रागद्वेषयोर्विनाशाय क्रियते यो जनः पुना रागद्वेषौ न करोति तस्येदंव्रतादिविधानं निष्प्रयोजनमर्थाद्रागद्वेषाऽविधानत्वेनैव तस्यात्मा निर्मलः स्यात् नूतनबन्धनानि च न लभते यश्च रागद्वेषौ विधत्ते तत्कृता व्रत–तपो–जपादि नियमावृथा सन्ति पुनरेतदाशयेन तन्निष्फलत्वं प्रोच्यते यद्रागद्वेषनिवारणायतु व्रतादीनामिदं विधानत्वं यदि च स तद्रागादित्यागेऽसमर्थो भवेत्तत्पश्चात्तेषां व्रतादीनामीप्सितफलस्याऽदातृत्वेन कृतान्यप्यकृत सदृशानि भवन्ति ।

भवेदत्र कर्मक्षयमुख्यत्वं यत्पुनः पुण्यबन्धोभवेद् व्रतादितस्तत्तु वृत्तान्तं गौणमनयाऽपेक्षयाच व्रतादिविधाने सत्यापि

रागद्वेपत्यागो न विधीयेत तदा तस्य व्रतादिविधानस्य निष्फलत्वं प्रोक्तमन्यथा तु पुण्यवन्धो भवेदेतावता व्रतादीनां सर्वथातु निरुपयोगित्वंतु नास्त्येव,यो जनः कस्मिन्नपि स्थले रागं किंवा द्वेपं न विधत्ते किन्तु सदौदासीन्यं भजते स । "प्रत्याख्यानेन" निखिलदोषानुल्लंघयति, प्रत्याख्यानत्वमेतावताऽस्मिन्वस्तुसंबन्धे रागद्वेपौ भविष्यकाले न विधास्यामि तादृक् प्रतिज्ञाकरणं किंवा तादृशदृढनिश्चयविधानं तद्, पुनरेतादृशप्रत्याख्यानेन रागद्वेपन्यूनत्वविधायकः प्रत्याख्यानविधानस्य सममेव रागद्वेपौ विहायौदासीन्ये समागतोऽस्ति किंवा रागद्वेपाऽभाववती यौदासीन्य वृत्तिः सा तस्मिन्नागता ततः प्रत्याख्यानाऽवधिं य उल्लंघितवान् भवति, प्रत्याख्यानेन तेन यत्कार्यं कर्त्तव्यं स्यात् तत्संजातत्वेनाऽथ तस्य प्रत्याख्यानोपयोगित्वंनास्त्यर्थात्प्रत्याख्यानस्य विना विधानेनाऽपि प्रत्याख्यान कारकस्येव तद्वर्त्तनं वर्तितं स्यात् स मनुष्यः संवरभावेस्थितोऽस्ति पुनः कर्मनिर्जरां च विधत्ते तस्मै प्रत्याख्यानस्य किं प्रयोजनं ? यश्च मनुष्यो रागीस्यात्तस्मिन्संसारहेतुभूता दोपा अनवरतं निवसन्ति परं यो ज्ञानी वीतरागश्च न तस्मिन् केऽपि दोपा निवसेयुः पुनर्जीवेभ्य औदयिकभावो वन्धकारणं किन्तु पारिणामिकभावो मोक्षकारणमस्ति, कर्मोदयेन यो भावो भवेत् स " औदयिक " चतस्रो मनुष्यादिगतयश्चत्वारः क्रोधादिकपायाः स्त्रीवेदादित्रिवेदानामुदयः, कृष्णादिपट्लेश्याः मिथ्यादर्शनाऽज्ञानाऽसंयमाऽसिद्धत्वानित्यादिरूपा एकविंशतिरौदयिकभावाः सन्ति, यदांचाऽस्योदयो भवेत्तदा सामान्यतया सूक्ष्मवन्धोऽपि स्यात् किन्त्वभव्यत्वं विहाय जीवत्व-भव्यत्वे इमे द्वे पारिणामिकभावौ कर्मणउदयादिनापेक्षेते तस्मात्ततः कर्मवन्धो न भवति पुनस्तस्य मोक्षकारणत्वं स्यात् । इष्टविपयानामनुभवोत्पत्तिः वाह्येन्द्रियत उत्पद्यमानं सुखमस्ति पुनरात्माऽनुभव आत्मत उत्पद्यमान मान्तरसुखमस्ति विपयतश्चोत्पद्यमानं सुखं विनाश स्वभावमात्मतः प्रादुर्भवन्नानन्दोऽविनाशस्वभावमयश्च, द्वयोरनयोः सुखयोः

विरत्यन्तरमात्मानुभवनिवासे प्रयतितव्यं,जनेभ्यो
पृथ्व्यम्वरसदृशं विभिन्नत्वंस्यात्–तच्चाऽवगम्य विषयसुखान् तदनन्तरं विहाय–विरत्यन्तरमात्मानुभवनिवासे प्रयतितव्यं,जनेभ्यो
विषयसंवन्धिज्ञानं यद्भवेत्तत्सर्वमिन्द्रियजन्य–पौद्गलिकं च ज्ञानं भवेदात्मिकज्ञानंतु ततो विभिन्नं तत्त्वात्मतः प्रादुर्भवति तस्य च
सवन्धोऽप्यात्मना सहैव स्यात् पुनरिन्द्रियजन्यज्ञानमपि चैतन्यस्वरूपं त्वस्त्येव पुद्गलस्वरूपंतुनैव स्यात्तथापि तस्य च ज्ञानस्य
वैभाविकपरिणत्या तस्योत्पत्तौ पुद्गलमयेन्द्रियाणि कारणरूपाणि सन्ति ततस्तानि व्यवहारतः पुद्गलस्वरूपाणि प्रोच्यन्ते,
पञ्चसु च ज्ञानेषु " मति–श्रुत "–ज्ञाने कथिते इन्द्रियजन्ये, ततोऽनयाऽपेक्षया व्यवहारनयेनानयोर्ज्ञानयोः पौद्गलिकत्वं पुनरव-
ध्यादीनि त्रीणि ज्ञानान्यात्मापेक्षायुक्तानि सन्ति तत्प्रादुर्भवने इन्द्रियाऽपेक्षारहितत्वाच्चानि त्रिण्यात्मिकज्ञानानि सन्ति, पुनस्तेषु
त्रिष्वपि तात्त्विकतया त्वात्मिकज्ञानं त्वेकं " केवलज्ञानमेव " स्यात् ॥

## " न विद्यते ज्ञाने कोऽपि भेदः "

भेदविद्यमानत्वेऽपि तेषां ज्ञाने भेदो नास्ति, ब्राह्मण–क्ष-
गवां परस्परं भेदे सत्यपि यथादुग्धे भेदो न भवेत्तद्वत्पुरुषेषु भेदविद्यमानत्वेऽपि तेषां ज्ञाने भेदो नास्ति, पुनरनन्तज्ञानिनामेक
त्रिय–वैश्य–शूद्रादयः पुरुषाणामनेकभेदाः स्युस्तथापि ज्ञातृत्ववज्ज्ञानस्य स्वभावो निखिलेष्वेकसदृश एव, सर्वेषां ज्ञानंतु स्यादेकसदृश-
मेव ज्ञानं, यद्यपि तेषां वाह्यपुण्यप्रकृतिषु भिन्नत्वं स्यात् किन्तु ज्ञानावरणकर्मणां दूरीभवने तेषां किंवा मार्गमवगम्य तज्ज्ञानं
मेव । दीपेन यथा दृश्य पदार्थानां दर्शनानन्तरं दीपो दूरे स्थाप्यते तस्येव ज्ञानेन ज्ञेयपदार्थान् पुनरात्मनासहाऽभेदसंवन्धाऽ-
त्यज्यते, पुनरत्रैतावदपेक्षा ज्ञातव्या यद् यज्ज्ञानं "आत्मस्वरूपं–सूक्ष्मं–व्यपदेशरहित" मविनाशि विकृतज्ञानतश्च
न्वितं तत्तु भवेदेवज्ञानं परं यत् सांव्यवहारिकं–साधनरूपं–विकारप्रापकमिन्द्रियाऽपेक्षान्वितं तज्ज्ञानं त्यज्यते, स्कन्धछेदनेन यथा पुनः
पदार्थान् कर्त्तव्यं च ज्ञात्वा यदा स्वरूप ज्ञानस्या लम्वनं स्वीक्रियेत तदा तद्विकृतज्ञानं त्यज्यते ।

पल्लवाः प्ररोहन्ति परं वृक्षमूलछेदनेन पश्चान्न प्ररोहन्ति पल्लवाः, तथैव जन्ममरणविधायककर्मण एकांशछेदनेन पुनरुद्भवन्ति विकाराः किन्तु तन्मूलविनाशेन विकारानोद्भवेयुः पुनः, जन्म-मरणविधायककर्मणामेकभागः स-शुभतपश्चर्या-व्रत-तप-जपाऽहिंसा-परोपकारादिभिः कृत्वाऽशुभपर्यायनाश एतावताऽऽन्तुकाऽशुभकर्माणि रुद्धानि भवन्ति।

यतः शुभकर्मविधानसमय एतावान् गृहीतो जीवेन यदशुभकर्मनिर्माणसमयो न मिलितस्ततश्चाऽशुभकर्माणि न्यूनत्वेन वद्धानि किन्तु तेन शुभकर्मणा "उत्तमगतावुत्तमजातावुत्तमगोत्रे" च जन्म धर्त्तव्यमेव भवेत्, लब्धाश्च तत्र निखिलाऽनुकूलसंयोगाः, पुनरीप्सितपञ्चेन्द्रियविषया भोक्तुं मिलितास्तादृशाऽनुकूलसंयोगेषु रागविधानतः प्रतिकूलसंयोगेषु द्वेषकरणतस्तथैव पापवर्द्धकाचरणविधानतः पुनरशुभकर्मणः पल्लवाः प्ररोहन्ति तेन च कृत्वा वारंवारं जन्ममरणानि विधातव्यानि स्युः, ततश्च शुभाऽशुभकर्मणोर्विनाशो विधातव्यः स्यात् तद्विनाशोमूल विनाशसदृश एव ततः पुनर्भववृक्षतो जन्ममरणादिपल्लवादि प्ररोहणस्य विनाशो भवेत्, मूलछेदकस्तु शुद्धात्मध्यानस्यैव मार्गस्ततो निकटस्थायं सरलोमार्गो यस्य हस्ते समागतोऽस्ति येन च यथार्थतया ज्ञातोऽस्ति तस्य पुण्यसंवन्धिदीर्घक्लिष्टमार्गेण गमनावश्यकं न स्यात्, स्वात्मनि सुस्थितस्य शुद्धात्मस्वरूपस्य ध्यानेन मोक्षप्राप्तिर्भवितुं शक्याऽस्ति।

जडमायारूपं दृश्यमानमिमं वाह्यविश्वं महाजना अनात्मीयमिन्द्रजालसदृशं च ज्ञात्वा विनाशस्वरूपं, स्थिरात्मतत्त्वस्य ध्यानेन मिथ्यात्वरूपगिरीनविरतिरूपनदीः कषायरूपाऽग्निं लोभात्मकसमुद्रमुल्लंघ्य निर्वाणरूपशान्तिस्थान समधिगच्छन्ति, तादृशानामात्मस्वरूपस्थिरीभूतानां वीरपुरुषाणां जन्मोद्भवस्या जगति दीर्घसमयं स्थायित्वं सफलत्वं च भवेत्। यथा शुद्धात्मा निखिलपदार्थेषु श्रेष्ठः स्वरूपप्रतिष्ठितो नित्याऽऽनन्दस्वरूपः कर्मरहितः सूक्ष्मोऽतीन्द्रियपदार्थज्ञायको

ज्ञानिगम्यश्चाऽस्ति तथैवाऽयं ग्रन्थोऽखिलग्रंथेषूत्तम आत्मस्वरूपदर्शको नित्यानन्ददायको निर्दोषः सूक्ष्मविचारभृतः पुनरनुभव विधानेन लक्ष्यतयाऽऽगन्तुं शक्यश्च संसारविरक्तजीवेभ्यो ग्रन्थोऽयं विशेषतयोपयोगित्वेन समस्ति, यश्चजनश्चित्तं निर्मलं विधाय पुनरेकाग्रतयाऽमुं ग्रन्थं पठिष्यति तस्यैव वर्त्तनमपि विधास्यति पुनश्च स स्वरूपमधिगम्य नैरन्तर्येण परमशान्तिं प्राप्स्यति ।

इतिश्रीतपगच्छीयगच्छाधिपतिश्रीमन्मुक्तिविजयगणिनां–शिष्यश्रीमदाचार्यश्रीविजयकमलसूरीश्वराणांमुख्यपट्टधर-शिष्य श्रीमदाचार्यश्रीविजयकेशरसूरीश्वरेण विरचितो श्रीमहावीरतत्त्वप्रकाशाभिधानको ग्रन्थः भावनगर बंदरे एकोनविंशतिशतपूर्वद्व्य-शीतितम वर्षे समाप्तः

॥ ॐ शान्तिः ॐ शान्तिः ॐ शान्तिः ॥

